हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

८६

काव्यविभागे (१३) त्रयोदशं पुष्पम् ।

राजशेखरविरचिता

# काव्यमीमांसा

(प्रथमाध्यायमारभ्य पञ्चमाध्यायपर्यन्ता)

काशीस्थराजकीय सरस्वतीभवनोपाध्यक्ष साहित्याचार्य
पण्डित श्रीनारायणशास्त्रि खिस्ते-कृत काव्य
मीमांसा-चन्द्रिकाटीका सहिता ।
टीकाकर्त्रैव सम्पादिता च

तस्याः
(प्रथमो भागः)

प्रकाशक—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

१९८७

# भूमिका।

यथेयमुपक्रम्यते **काव्यमीमांसा-चन्द्रिका** आदित पञ्चमाध्यायपर्यन्त मुद्रयित्वा प्रकाशयितुम्। काशीस्थराजकीयसंस्कृतपरीक्षाधिकारिभिर्नवप्रवर्त्तितायां साहित्यमध्यमपरीक्षायां काव्यमीमांसाया आदिमा पञ्चाध्याया संनिवेशिता। तत्र काव्यमीमासाया दुरवगाहता तत्र प्राचीनव्याख्यानाभाव तन्मूलक च परीक्षार्थिच्छात्राणा क्लेश च विचिन्त्य बहुभिराग्रहेश्छात्रै प्रार्थित काशीस्थचौखम्बा-संस्कृतग्रन्थमालाद्यनेकग्रन्थमालाप्रवर्त्तक बाबूजयकृष्णदासहरिदासगुप्तमहोदयैश्च मानुरोधं समुद्योजितश्च प्रावर्तिषि व्याख्यालिखने। सेय व्याख्या ऽऽपञ्चमाध्याय-मवसिता प्रथमभागत्वेन सहृदयाना पाठकाना करकमलेपूपायनीक्रियते।

राजशेखरवचसा विपुलार्थवत्त्वात्तत्र तत्र स्थलविशेषे सविशेष व्याख्यानमपेक्षितमासीत्, तथाऽपि परीक्षार्थिच्छात्रसाहाय्यमेव मुख्य प्रयोजनमस्या निश्चिन्वता मया तदनुरोधेन यथामति सङ्क्षेप एव प्रयतितम। विशेषजिज्ञासुभिराकरग्रन्थानुशीलने प्रयतितव्यम्।

मूलग्रन्थे च क्वचिन् क्वचिदर्थानुरोधेन मया स्वाभिमत पाठभेदोऽपि कल्पित। प्रथमाध्याये च 'इय सा काव्यमीमांसा मीमासा यत्र वाग्लव' इत्यत्र "मीमास्यो यत्र वाग्लव" इति पाठभेदश्चास्मत्सुहृदा पण्डितप्रवराणा श्रीगुरुप्रसादव्याकरणाचार्याणामनुमत्या स्थापित। इत्थमेव प्रकृतग्रन्थे बहव पाठभेदा श्रीगुरुप्रसाद-पण्डितै कल्पिताः सन्ति, ते च तै स्वकृतटीकासहिते अनुपदमेव मुद्रयिष्यमाणे काव्यमीमासासंस्करणे प्रदर्शयिष्यन्त इति तेषामेव मुखाच्छ्रुतमस्ति। पूर्वोक्तप्रथमाध्यायीयपाठभेदप्रदर्शननिमित्तं शतशो धन्यवादैरभिनन्दाम्यहं तान्। अथ मधुसूदनीवृत्तिरित्याख्या काऽपि पञ्चाध्यायीवृत्तिर्मुद्रिता पुरस्तिष्ठति। सा च चतुर्थाध्यायपर्यन्त प्रकृतचन्द्रिकाटीकामुद्रणे ऽवसिते दृष्टिगोचरीभूता इत्यत पञ्चमाध्यायचन्द्रिकायामेव स्थले २ मधुसूदनी सुपरीक्षिताऽस्ति।

अथ मूलग्रन्थकर्तु श्रीमतो राजशेखरस्य विषये सङ्क्षिप्तमितिवृत्त निरूप्यते—

राजशेखर स्वात्मान 'यायावरीय' इत्युपपदेनैव सर्वत्र स्मरति। तत्र यायावरकुलोत्पन्न इत्येवार्थ। अन्ये प्राचीना धनपालादयो ग्रन्थकृतस्तु राजशेखरं 'याया-

वर' पदेन स्मरन्ति । राजशेखरो ब्राह्मण. क्षत्रियो वाऽऽसीदित्यपि सन्दिग्धमेव । यतो महेन्द्रपालराजोपाध्यायत्वं तस्य ब्राह्मण्यं गमयति, चौहानवंशराजकुमार्या पाणिग्रहणं च तस्य क्षत्रियत्व ध्वनयति । राजशेखरेण काव्यमीमांसायां प्रायस्त्रि-वारं स्वप्रियाया अवन्तिसुन्दर्या मतापन्यासः कृत', तेन साऽपि ग्रन्थकर्त्री विदुषी चासीदित्यनुमीयते । विविधै' प्रमाणैरितिहासविवेचका राजशेखरस्य ८८०-९२० ख्रिस्ताब्दपर्यन्त स्थितिकाल कल्पयन्ति । काव्यमीमांसायां राजशेखरेण दर्शितासु कवेर्दशस्ववस्थासु कविराजावस्था हि सर्वोत्कृष्टा परमदुर्लभा च । राजशेखरस्त्वा त्मान कविराजमेव कथयति न तु महाकविम् । बालरामायणं, बालभारत, विद्धशाल-भञ्जिका च राजशेखरस्य शैशवकालिका ग्रन्था । हरविलासाख्यो महाप्रबन्धश्च कविराजावस्थापन्नस्य राजशेखरस्य कृतिरित्यनुमीयते । 'भुवनकोश' इत्याख्योऽपि ग्रन्थोऽस्यैव कृतिरित्यप्यनुमीयते ।

अयमुपलभ्यमानः काव्यमीमांसाया भाग काव्यमीमांसाग्रन्थस्य प्रथमभा-ग एव ।

यदि पञ्चाध्यायीटीकेयं छात्राणामुपकारिणी भवेत् सहृदयाश्च विनैव नासा-क्षिसङ्कोचं तामभिनन्देयुस्तर्हि षष्ठाद्यवशिष्टाध्यायव्याख्यानेऽपि प्रयतिष्यते ।

अस्मिन् कार्ये यै कैरपि येन केनाऽप्यध्वना साहाय्यमाचरितं, तान् सर्वान् धन्यवादैरभिनन्द्य स्मृत्वा च परदेवतागुरुचरणान् विरमामि मुधा विस्तरादिति शम् ।

सरस्वतीभवनम्
काशी ।
महाशिवरात्रिः ।
संवत १९८७

विदुषां विधेयो
नारायण शास्त्री खिस्ते



राजशेखरविरचिता

# काव्यमीमांसा ।

## कविरहस्यम् ।

### प्रथमोऽध्यायः शास्त्रसङ्ग्रहः ।

अथातः काव्यं मीमांसिष्यामहे यथोपदिदेश श्रीकण्ठः परमेष्ठि-

॥ श्रीः ॥

## काव्यमीमांसाचन्द्रिका

वन्दे श्रीगणनायकमखिलसुरेन्द्रप्रपूजितं सततम् ।
गिरिवरतनयास्तन्यास्वादनसम्प्राप्तसर्वसामर्थ्यम् ॥ १ ॥

कामेशकल्पपादपमारूढा पुण्ड्रदण्डमवलम्ब्य ।
काचन कविता लतिका ललिताकृतिरन्तरुल्लसतु ॥ २ ॥

प्रणम्य वाणीं पितरौ गुरूनपि दयानिधीन् ।
रुचिरा काव्यमीमांसाचन्द्रिकेयं वितन्यते ॥ ३ ॥

परीक्ष्यच्छात्रवृन्दस्योपकारायैष उद्यमः ।
सदयाः सन्तु सन्तोऽत्र साहित्यार्णवपारगाः ॥ ४ ॥

राजशेखरवचोगभीरता कुत्र, मन्दमतिता च कुत्र मे ।
केवलं गुरुपदाब्जसंस्मृतिर्दुष्करे ऽत्र विषये ऽस्ति मे गतिः ॥ ५ ॥

अथ तत्र भवान् कविकुलसार्वभौमो राजशेखरो नाम महाकविः शिष्य-जनावबोधसौकर्याय विच्छिन्नप्रायं सुकविसम्प्रदायं प्राचीनाकरग्रन्थेभ्य सद्गुरुसम्प्रदायाच्च यथायथ सङ्गृह्य निबध्नाति—अथात इति । 'काव्य मीमांसिष्यामहे' इति प्रतिज्ञा । तस्याः स्वकपोलकल्पितत्वनिरासायाह—'यथोपदिदेश श्रीकण्ठ' इत्यादि । यथा भगवता शिवेन अप्रति-

वैकुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्यः । सोऽपि भगवान्स्वयम्भूरिच्छाजन्मभ्यः स्वान्तेवासिभ्यः । तेषु सारस्वतेयो वृन्दीयसामपि वन्द्यः काव्यपुरुष आसीत् । तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्त्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्त्तनायै प्रायुङ्क्त । सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच । तत्र कविरहस्यं सहस्राक्षः समाम्नासीत् । औक्तिकमुक्तिगर्भः । रीतिनिर्णयं सुवर्णनाभः । आनुप्रासिकं प्रचेताः । यमो यमकानि । चित्रं चित्राङ्गदः । शब्दश्लेषं शेषः । वास्तवं पुलस्त्यः । औपम्यमौपकायनः । अतिशयं पाराशरः । अर्थश्लेषमुतथ्यः । उभयालङ्कारिकं कुबेरः । वैनोदिकं कामदेवः । रूपकनिरूपणीयं भरतः । रसाधिकारिकं नन्दिकेश्वरः । दोषाधिकरणं धिषणः । गुणौपादानिकमुपमन्युः । औपनिषदिकं कुचमारः । इति । ततस्ते पृथक् पृथक् स्वशास्त्राणि विर-

---

ण्ठवादिभ्यः शिष्येभ्यः समुपदिष्टम्, तदेवाऽत्र मयाऽनूद्यते, न किञ्चित् स्वबुद्ध्या कल्प्यते इति भावः । सम्प्रदायक्रमं दर्शयति—**सोऽपीति** । शिवोपादिष्टो ब्रह्मा स्वीयमानसपुत्रानुपदिदेश । तेषु सारस्वतेयः काव्यपुरुषो विद्यातपोऽभ्यर्हितः सर्वेषामपि वन्दनीय आसीत् । प्रजापतिश्च तं त्रिकालज्ञं विचिन्त्य त्रिलोक्यां काव्यविद्याप्रवर्तनाय समादिदेश । स च काव्यपुरुषः अष्टादशाधिकरणीं=अष्टादश अधिकरणानि यस्यास्तादृशीं काव्यविद्यां दिव्येभ्यः काव्यविद्यास्नातकेभ्यः स्वान्तेवासिभ्यः सविस्तरं प्रोवाच । इत्थमुपदिष्टेषु शिष्येषु केन कस्याधिकरणस्य प्रचारः कृत इति निर्दिशन्नाह—**तत्र कविरहस्यं सहस्राक्षः सान्नासीत्** । इत्यादि । **औक्तिकमिति** । उक्तिचमत्कारमित्यर्थः । **वास्तवमिति** । भूतार्थवर्णनमित्यर्थः । स्वभावोक्तिमिति यावत् । **अतिशयमिति** । अतिशयोक्तिरूपालङ्कारमित्यर्थः । सहस्राक्षादिभिः शिष्यैश्च स्वस्वाधिकरणानि पृथक् पृथक् तत्तच्छास्त्ररूपेण बहुलं प्रपञ्चितानीति निर्दिशन्नाह—**ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयाञ्चक्रुरिति** । इत्थं विस्तीर्णोऽसौ काव्यविद्या-

---

१ आनुप्रासिकं प्रचेतायनः । यमकानि चित्रं चित्राङ्गदः । इति पूर्वमुद्रितपाठः ।

बयाश्रक्रुः । इत्थङ्कारञ्च प्रकीर्णत्वात् सा किञ्चिदुच्चिच्छिदे । इतीयं प्रयोजकाङ्गवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशाधिकरणी प्रणीता। तस्या अयं प्रकरणाधिकरणसमुद्देशः । शास्त्रसङ्ग्रहः, शास्त्रनिर्देशः, काव्यपुरुषोत्पत्तिः, पदवाक्यविवेकः, पाठप्रतिष्ठा, अर्थानुशासनं, वाक्यविषयः, कविविशेषः, कविचर्या, राजचर्या, काकुप्रकाराः, शब्दार्थाहरणोपायाः, कविसमयः, देशकालविभागः, भुवनकोश, इति कविरहस्यं प्रथममधिकरणमित्यादि । इति सूत्राण्यथैतेषां व्याख्या भाष्यं भविष्यति ।

समासव्यासविन्यासः सैष शिष्यहिताय नः ।
चित्रोदाहरणैर्गुर्वी ग्रन्थेन तु लघीयसी ।
इयं नः काव्यमीमांसा काव्यव्युत्पत्तिकारणम् ।
इयं सा काव्यमीमांसा मीमांस्यो यत्र वाग्लवः ॥

---

सम्प्रदायः कालप्रभावेण किञ्चिदुच्छिन्नोऽभूत् । ग्रन्थप्रणयनप्रयोजनमाह—**इतीयमिति** । सम्प्रदायस्य किञ्चिदुच्छिन्नत्वादेव हेतोस्तस्य सरक्षणाय सर्वमर्थजात सङ्क्षिप्य इयमष्टादशाधिकरणी काव्यमीमांसा प्रणीतेति भावः । अस्याः काव्यमीमांसायाः प्रथमाधिकरणमात्रमेव ग्रन्थोऽयम् । अत्र निरूपणीयान् विषयान् नामग्राहमाह—**शास्त्रसङ्ग्रह इत्यादिना**—इत्येतेषां सूत्राणां भाष्यं ग्रन्थकर्त्रैव पुरः करणीयत्वेन प्रतिज्ञातमिति नेह तद्विषये किमपि वक्तुमुचितम् । यथावसरं सर्वं स्पष्टीभविष्यति । शास्त्रसङ्ग्रहं प्रतिज्ञामुखेन सार्धश्लोकत्रयेणाह—**समासव्यासविन्यास इति** । समासः सङ्क्षेपः । व्यासो विस्तरः । तयोर्विन्यासो निवेशनम् । केषाञ्चिद्विषयाणां सङ्क्षेपेण वर्णनम्, केषाञ्चिद्विस्तरेण । यद्वा एकस्यैव पदार्थस्य सङ्क्षेपविस्तराभ्यां निरूपणम् । तदेतत्सकलं शिष्यहितोद्देशेन कृतमिति भावः । प्रकृतग्रन्थस्योपादेयतामाह—**चित्रोदाहरणैरिति** । लघुनाऽपि प्रमेयेण सहितैः चित्रैरुदाहरणैर्गुरुभूतेत्यर्थः । **इयं नः काव्यमीमांसेति** । नः= अस्मत्कर्तृका इयं काव्यमीमांसा । काव्यस्य दृश्यश्रव्यात्मकस्य । द्विविधस्या-

---

१ 'मीमांसा यत्र वाग्लवः' इति पूर्वमुद्रितपुस्तकपाठः ।

वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ।
यायावरीयः सङ्क्षिप्य मुनीनां मतविस्तरम् ।
व्याकरोत्काव्यमीमांसां कविभ्यो राजशेखरः ।

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
प्रथमोऽध्यायः शास्त्रसङ्ग्रहः ।

---

## द्वितीयोऽध्यायः शास्त्रनिर्देशः ।

इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च। शास्त्रपूर्वकत्वात् का-

---

ऽपि काव्यस्य व्युत्पत्तेः=रससाक्षात्कारौपायिकज्ञानविशेषस्य कारणं हेतुरिति । किञ्च, इयं काव्यमीमांसा, सा=तथाविधमहिमशालिनी, यत्र=यस्यामित्यर्थः । वाचो विविधविभेदाया लवः काव्यात्मको मीमास्यः विचारणीयः । एनामनधीत्य काव्यात्मकस्य वाग्लवस्य ज्ञानमसुकरमित्याह—**वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ।** इति । आत्मनामनिर्देशपुरःसरं प्रकृतग्रन्थपठनाधिकारिणोऽपि निर्दिशन्नाह—**यायावरीय इति** । यायावरीयः राजशेखरः मुनीनां मतविस्तरं साङ्क्षिप्य काव्यमीमांसां व्याकरोत् । किमर्थम् ? कविभ्यः । कवीनां कृते इत्यर्थः । इत्थं च प्रकृतग्रन्थपठनाधिकारिणः कवय एव नाऽन्ये इति फलितम् । तथा च, अष्टादशाधिकरणी काव्यविद्या विषयः, काव्यव्युत्पत्तिः प्रयोजनम् , प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । कवयश्चाधिकारिण इत्यनुबन्धचतुष्टयमपि दर्शितम् ।

इति श्रीमत्खिस्तेवंशसम्भूत भैरवनायकतनुजनि–श्रीनारायणशास्त्रिप्रणीतायां
काव्यमीमांसा–चन्द्रिकायां शास्त्रसङ्ग्रहो नाम प्रथमोऽध्यायः ॥ १ ॥

---

मूलभूतं वाङ्मयं द्विधा विभजते—**इह हीति** । वाङ्मयम्=वाक्प्रपञ्चः, वाग्जालमिति यावत् । उभयथा=द्विप्रकारमित्यर्थः । प्रकारद्वयमाह—**शास्त्रं काव्यं चेति** । अनधीतशास्त्राणां काव्यव्युत्पत्तेरसम्भवादाह—**शास्त्रपूर्वकत्वादिति** । काव्येषु व्युत्पत्त्याधानाय शास्त्रेषु पूर्वमभिनि-

**न्यानां पूर्वं शास्त्रेष्वभिनिविशेत । नह्यप्रवर्तितप्रदीपास्ते तत्त्वार्थसार्थमध्यक्षयन्ति । तच्च द्विधा अपौरुषेयं पौरुषेयं च । अपौरुषेयं श्रुतिः । सा च मन्त्रब्राह्मणे । विवृतक्रियातन्त्रा मन्त्राः । मन्त्राणां स्तुतिनिन्दाव्याख्यानविनियोगग्रन्थो ब्राह्मणम् । ऋग्यजुःसामवेदास्त्रयी आथर्वणश्च तुरीयः । तत्रार्थव्यवस्थितपादा ऋचः । ताः सगीतयः सामानि । अच्छन्दांस्यगीतानि यजूंषि । ऋचो यजूंषि ( सामानि ) चाथर्वणं त इमे चत्वारो वेदाः । इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः ।**

---

वेष्टव्यम् । दृष्टान्तमाह—**न हीति** । अप्रवर्तितप्रदीपास्तमसि वस्तुजातं प्रत्यक्षीकर्तुं यथा न शक्नुवन्ति तथैवाऽनधीतशास्त्राः काव्यमर्माण्यपि बोद्धु न पारयन्तीति भावः । वाङ्मयस्याऽपि द्वैविध्यमाह—**तच्चेति** । तच्च द्विप्रकारकम् । प्रकारद्वयमाह—**अपौरुषेयं पौरुषेयं चेति** । तत्राऽपौरुषेयं विवृण्वन्नाह—**अपौरुषेयं श्रुतिरिति** । श्रुतेः स्वरूपमाह—**सा चेति** । मन्त्रब्राह्मणयोः श्रुतिरिति संज्ञेति भावः । मन्त्रस्वरूपमाह—**विवृतक्रियातन्त्रा मन्त्रा इति** । विवृतं=सम्यङ्निरूपितं क्रियातन्त्र कर्मकाण्डकलापो यैस्ते तथाविधा इत्यर्थः । ब्राह्मणस्वरूपमाह—**मन्त्राणामिति** । मन्त्राणां तत्तत्प्रसङ्गसङ्गत्यादिपूर्वापरपर्यालोचनमुखेन स्तुतिनिन्दाव्याख्यानविनियोगादिपर्यवसायित्वप्रतिपादकः सामान्यतो मन्त्रभागस्य भाष्यात्मको ग्रन्थो ब्राह्मणमिति भावः । ब्राह्मण त्रिविधम् । विधिरूप, अर्थवादरूप, तदुभयविलक्षण चेत्यन्यत्र विस्तरः । श्रुतिं चतुर्द्धा विभजते—**ऋग्यजुःसामवेदास्त्रयी । अथर्वणश्च तुरीय इति** । प्रत्येकं विवृण्वन्नाह—**अर्थव्यवस्थितपादा ऋच इति** । यत्र प्रतिपादमर्थो व्यवस्थितोऽस्ति ता ऋच इति । अर्थसमाप्त्यधीनैव यत्र पादसमाप्तिरिति भावः । पादबद्धगायत्र्यादिछन्दोविशिष्टा ऋच इत्यन्यत्र । गीतिसहितास्ता एव सामानि । गीतिरहितानि छन्दोरहितानि च तान्येव यजूंषि । इत्थमिमे ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदाः । उपवेदानाह—**इतिहासेति** । इतिहासवेदः (इतिहासः पुराणं च पञ्चमो वेद उच्यते) इत्याभियुक्तोक्तेः । धनुर्वेदः, गान्धर्ववेदः, आयुर्वेदश्चेति चत्वार उपवेदाः । तथा च **प्रस्थानभेदे मधुसूदनसरस्वतीस्वामिपादाः**—'आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति

"वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो गेयवेदः" इति द्रौहिणिः। "शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्योतिषं च षडङ्गानि" इत्याचार्याः। "उपकारकत्वादलङ्कारः सप्तममङ्गम्" इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतिः। यथा—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति॥

---

चत्वार उपवेदाः' इत्याहुः। गान्धर्वस्य वेदत्वे प्राचीनाचार्यसम्मतिमाह—**वेदोपवेदात्मेति**। वेदोपवेदात्मा=वेदः उपवेदश्च आत्मा स्वरूपं यस्येत्यर्थः। सामवेदस्य गीतात्मकत्वात् वेदात्मत्वं तु गेयवेदस्य सिद्धमेव। लौकिकाऽवैदिकगीतादिप्राचुर्यात् इतिहासधनुर्वेदादिसम्बद्धगीतबाहुल्याच्चोपवेदात्मत्वमपि। **सार्ववर्णिक इति**। वेदस्य तु 'अधीयीरंस्त्रयो वर्णाः' इति नियमेन त्रैवर्णिकेतरानुच्चार्यत्वेन न सार्ववर्णिकत्वम्। अस्य गेयवेदस्य तु तथाविधनियन्त्रणाभावेन सर्ववर्णोच्चार्यत्वमिति। तत्र वेदात्मनो गेयवेदस्य न सार्ववर्णिकत्वम्, उपवेदात्मन एव तस्य तत्त्वमिति ध्येयम्। वेदस्य षडङ्गान्याह—**शिक्षेत्यादिना**—शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्योतिषं चेति षडङ्गानि, इत्याचार्याणां मतम्। यायावरीयत्वेन प्रच्छन्नस्य स्वस्य मतमाह—**उपकारकत्वादिति**। षट्स्वङ्गेष्वपरिगणनेऽपि व्युत्पत्त्याधायकत्वेनोपकारकत्वादलङ्कारोऽपि सप्तममङ्गमिति। तदस्वीकारे वेदार्थानवगतिरूपामनुपपत्तिमुदाहरणद्वारा दर्शयति यथा—**द्वासुपर्णेति**। द्वा=द्वौ, सुपर्णा=सुपर्णौ पक्षिणावित्यर्थः। सयुजा=सयुजौ सहचरावित्यर्थः। सखाया=सखायौ। समानमेकम्। वृक्षं परिषस्वजाते आलिङ्गत इत्यर्थः। तयोः पक्षिणोर्मध्ये अन्यः=अन्यतर इत्यर्थः। स्वादु=मधुरम्। पिप्पलम्=इदं फलोपलक्षणम्। फलसामान्यमित्यर्थः। अत्ति=भक्षयति। अन्यः=पूर्वोक्तादन्य इत्यर्थः। अनश्नन्=मधुरफलान्यभक्षयन् सन् अभिचाकशीति=अभितः=समन्ततः चाकशीति=प्रकाशते इत्यर्थः। अयं भावः—इमौ जीवशिवौ एकमेवावलम्बमालम्ब्य स्थितौ। तत्र जीवस्तु शब्दादीन् विषयान् तज्जन्यसुखानुभवपूर्वकं भुङ्क्ते। अन्यः शिवस्तु तादृशभोगपराङ्मुख एव साक्षि-

सेयं शास्त्रोक्तिः । प्रत्यधिकरणं च ऋचं यजुः सामाथर्वणं ब्राह्मणं चोदाहृत्य भाषामुदाहरिष्यामः । तत्र वर्णानां स्थानकरणप्रयत्नादिभिः निष्पत्तिनिर्णयिनी शिक्षा आपिशलीयादिका । नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं कल्पः । सा च यजुर्विद्या । शब्दानामन्वाख्यानं व्याकरणम् । निर्वचनं निरुक्तम् । छन्दसां प्रतिपादयित्री छन्दोविचितिः । ग्रहगणितं ज्योतिषम् । अलङ्कारव्याख्यानं तु पुरस्तात् । पौरुषेयं तु पुराणम्, आन्वीक्षिकी, मीमांसा, स्मृतित-

---

रूपेण सर्वत्र प्रतिभासते इति । इयं शास्त्रोक्तिरालङ्कारिकविषया रूपकालङ्कारमुखेन प्रदर्शिता, अनधीतालङ्कारदर्शनास्तु तत्र रूपकाद्यलङ्कारचमत्कारमनुभवितुं न पारयन्तीति सप्तमाङ्गत्वेनालङ्कारस्वीकारोऽपि समुचित इति । स्वपरिगृहीतक्रममाह—**प्रत्यधिकरणं चेति** । पूर्वोक्तानां शिक्षाकल्पादिवेदषडङ्गानां प्रत्येकं क्रमशो निर्वक्ति—**तत्र वर्णानामिति** । कस्य वर्णस्य किमुत्पत्तिस्थानम्, केन करणेन कीदृशप्रयत्नेन च कस्य वर्णस्योच्चारणं भवतीत्यादि यत्र निर्णीयते सा शिक्षेत्यर्थः । शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनम् । **आपिशलीयादिका** । आदिपदात् पाणिनीयाज्ञवल्क्यादिसंग्रहः । कल्पमाह—**नानाशाखाधीतानामिति** । कल्पसूत्रे हि कस्य मन्त्रस्य कुत्र विनियोग इत्यादि निरूपितमिति भावः । तादृशविनियोगसम्पादिका विद्यैव यजुर्विद्या । व्याकरणमाह—**शब्दानामिति** । स्वतः सिद्धानामेव शब्दानाम् । अनु=पश्चात् आख्यानं साधनप्रयास इत्यर्थः । तदेव व्याकरणम् । व्याक्रियन्ते शब्दा अनेनेति व्युत्पत्तेः । तथाचोक्तमभिधानचिन्तामणिटीकायाम्—प्रकृतिप्रत्ययोपाधिनिपातादिविभागशः । पदान्वाख्यानकरणं शास्त्रं व्याकरणं विदुः । इति ।

निरुक्तमाह—**निर्वचनमिति** । स्पष्टम् । छन्दोविचितिमाह—**छन्दसामिति** । इदमपि स्पष्टम् । ज्योतिषमाह—**ग्रहगणितमिति** । सप्तमाङ्गत्वेन स्वपरिगृहीतस्यालङ्कारस्यापि क्रमप्राप्तत्वान्निर्वचनमुचितमपि तत्र बहुवक्तव्यत्वादग्रे तत्करणं प्रतिजानन्नाह—**अलङ्कारव्याख्यानमिति** । एतावत्पर्यन्तमपौरुषेयस्य वाङ्मयस्य विचारः कृतः । अथ क्रमप्राप्तं पौरुषेयं वाङ्मयं वर्णयन्नाह—**पौरुषेयं तु पुराणमिति** । १ पुराणम्

न्त्रमिति चत्वारि शास्त्राणि । तत्र वेदाख्यानोपनिबन्धनप्रायं पुराण-मष्टादशधा । यदाहुः—

सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशविधिः ।
जगतो यत्र निबद्धं तद्विज्ञेयं पुराणमिति ॥ ८

"पुराणप्रविभेद एवेतिहासः" इत्येके । स च द्विधा परिक्रियापुराकल्पाभ्याम् । यदाहुः—

परिक्रिया पुराकल्प इतिहासगतिर्द्विधा ।
स्यादेकनायका पूर्वा द्वितीया बहुनायका ॥

तत्र रामायणं भारतं चोदाहरणे । आन्वीक्षिकीं तु विद्यावसरे व-

---

२ आन्वीक्षिकी ३ मीमांसा ४ स्मृतितन्त्रमिति सामान्यतश्चत्वारि पौरुषेयाणि । तत्र प्रथमतः पुराणं निर्वक्ति—**तत्रेति** । तत्र=पौरुषेयवाङ्मयमध्ये । वेदेषु बीजरूपेणोपन्यस्तानामाख्यानाना यत्र सम्यगुपनिबन्धनं भवति तत्पुराणमित्यर्थः । क्वचित् वेदाऽनिर्दिष्टकथासन्दर्भोऽपि दृश्यते इति प्रायग्रहणम् । तच्च पुराणमष्टादशधा । प्राचीनोक्तं पुराणस्वरूपमाह—**सर्ग इति** । यत्र जगतः सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशानुक्रमश्च निबद्धस्तत् पुराणं विज्ञेयमित्यर्थः । इतिहासस्याऽपि पौरुषेयत्वात् पौरुषेयवाङ्मये स कथं न परिगणित इत्याह—**पुराणप्रविभेद एवेतिहास इत्येके इति** । इतिहासो न वस्त्वन्तरम्, अपि तु पुराणान्तर्गतवंशानुक्रम एव स इति न तत्पृथग्गणनोचितेत्येके वदन्ति । इतिहासं विभजते—**स च द्विधेति** । स च इतिहासो द्विविधः । परिक्रियात्मकः पुराकल्पात्मकश्चेति । इदमेव भेदद्वयं सलक्षणं दर्शयन्नाह—**परिक्रियेति** । यत्रैकनायकसम्बद्धा कथा वर्णिता स्यात्, स परिक्रियात्मक इतिहासः । यत्र च बहुनायकसम्बद्धा कथा वर्णिता स पुराकल्पात्मक इतिहासप्रभेद इति । उभयोरपि प्रभेदयोरुदाहरणमाह—**तत्रेति** । तत्र रामायणं परिक्रियात्मकेतिहासोदाहरणम् । तत्र मुख्यस्य नायकस्य रामस्यैव कथा निबद्धाऽस्ति, अन्येषां नायकानां सम्बन्धिनी कथा वर्णिताऽपि मुख्यनायककथासापेक्षैवेति तदङ्गभूतैव । पुराकल्पात्मकेतिहासोदाहरणम्—महाभारतम् । अत्र कौरवाः पाण्डवा अन्येऽपि बहवो

ध्यामः। निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री मीमांसा। सा च द्विविधा विधिविवेचनी ब्रह्मनिदर्शनी च। अष्टादशैव श्रुत्यर्थस्मरणात्स्मृतयः। "तानीमानि चतुर्दश विद्यास्थानानि, यदुत वेदाश्चत्वारः, षडङ्गानि, चत्वारि शास्त्राणि" इत्याचार्याः। तान्येतानि कृत्स्नामपि भूर्भुवःस्वस्त्रयीं व्यासज्य वर्त्तन्ते। तदाहुः—

विद्यास्थानानां गन्तुमन्तं न शक्तो
जीवेद्वर्षाणां योऽपि साग्रं सहस्रम्।

---

नायका निबद्धाः, तत्सम्बन्धिन्यः कथा अपि नान्योन्यसापेक्षा इति। आन्वीक्षिकीस्वरूपं तु विद्यानिरूपणावसरे वक्ष्यते इति न निबद्धम्। मीमांसां निर्वक्ति-**निगमवाक्यानामिति**। सहस्रेणेत्युपलक्षणम्। असङ्ख्यैरित्यर्थः। न्यायैर्नियमैः। निगमवाक्यानां विवेक्त्री=विवेचिका मीमांसेत्यर्थः। शास्त्रीयनियमद्वारा श्रुतिवाक्यविचारशास्त्रं मीमांसेति यावत्। तां विभजते-**सा चेति**। सा मीमांसा द्विविधा। विधिविवेचनी=विधेः=ज्योतिष्टोमेन यजेतेत्यादेर्विधिवाक्यस्य विवेचनं=विचारो यस्या सेति कर्ममीमांसेत्यर्थः। ब्रह्मनिदर्शनी=ब्रह्मणो=वेदान्तमहावाक्यप्रतिपाद्यस्य निदर्शनं=दृष्टान्तादिविधया कथंचित् प्रतिपादनं यत्र क्रियते सेति ब्रह्ममीमांसोत्तरमीमांसेत्यर्थः। ब्रह्मणः स्वरूपतोऽनवगमात्तद्विवेचनस्याऽपि दुःशकतया दृष्टान्तादिद्वारैव तद्विचारः क्रियत इति विवेचनीत्यनुक्त्वा निदर्शनीत्युक्तम्। स्मृतिं निर्वक्ति=**अष्टादशैवेति**। श्रुत्यर्थस्य स्मरणोत्तरं यत्रोपनिबन्धः क्रियते सा स्मृतिरित्यर्थः। न्यूनाधिकसङ्ख्याव्यवच्छेदायाष्टादशैवेत्येवकारः। एतेनाष्टादशैव स्मृतयः प्रामाणिकाः, इतोऽधिकानां प्रामाण्यं चिन्त्यमिति राजशेखराशयः प्रतिभाति। उक्तेऽर्थे ऽभियुक्तोक्तिं प्रमाणयति—**तानीमानीति**। सङ्कलनया चतुर्दश-विद्यास्थानानि भवन्ति। यथा—चत्वारो वेदा ऋगादयः। शिक्षाकल्पादीनि तेषां षडङ्गानि। पुराणादीनि चत्वारि शास्त्राणि। मिलित्वा चतुर्दश भवन्तीत्याचार्याः। एतानि पूर्वोदितानि विद्यास्थानानि सम्पूर्णं भुवनत्रयं व्याप्य समवतिष्ठन्ते। विद्यास्थानप्रशंसायामभियुक्तोक्तिमुपन्यस्यति—**विद्यास्थानानामिति**। यः पुरुषो वर्षाणां साग्रं सहस्रमपि जीवेत्,

तस्मात्सङ्क्षेपादर्थसन्दोह उक्तो
व्यासः संत्यक्तो ग्रन्थभीरुप्रियार्थम् ॥

"सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्" इति यायावरीयः । गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च । तद्धि शास्त्राण्यनुधावति । "वार्त्ता कामसूत्रं शिल्पशास्त्रं दण्डनीति-

---

सोऽपि विद्यास्थानानामन्त गन्तुं न शक्तः । तस्मात्=विद्यास्थानानां पारदर्शनस्य दुःशकत्वात् । सङ्क्षेपादयमर्थसन्दोह उक्तः । विस्तारः किमिति न कृत इत्याह—**ग्रन्थभीरुप्रियार्थम्**=ग्रन्थपठनपरिशीलनादौ ये भीरवो भयशीलास्ते तथाविधं विस्तीर्णं विद्यास्थाननिरूपण बोद्धुं न पारयिष्यन्तीति तेषा प्रियार्थं व्यासो विस्तरः संत्यक्तः परिहृत इत्यर्थः । विद्यास्थानानि चतुर्दशेति पूर्वमुक्तम्, इदानीं काव्यमपि पञ्चदशं विद्यास्थानमस्तीति यायावरीयोपपदस्य स्वस्याभिमतमाह—**सकलविद्यास्थानैकायतनमिति** । सकलाना विद्यास्थानानामेकमद्वितीयमायतनं स्थानम् । चतुर्षु, षट्सु तदङ्गेषु चतुर्षु शास्त्रेष्वपि व्युत्पत्त्याध्यायकस्य काव्यस्य परमावश्यकत्वात् तस्य सकलविद्यास्थानैकायतनत्वं सिद्ध्यति । **पञ्चदशम्**=पूर्वोक्तचतुर्दशातिरिक्तम् । काव्यं पञ्चदशं विद्यास्थानमित्यर्थः । उक्तार्थमेव समर्थयति—**गद्यपद्यमयत्वादित्यादिना** । काव्यस्य गद्यपद्योभयात्मकत्वात् गद्यपद्योभयात्मकचतुर्दशविद्यास्थानव्युत्पत्त्याधायकत्वेनोपकारकत्वामिति भावः । **कविधर्मत्वादिति** । कविप्रौढोक्तिसिद्धत्वात्, कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वाच्चेत्यर्थः । **हितोपदेशकत्वाच्चेति** । कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशस्य कान्तासम्मितविधया सम्पादनेनाऽव्यभिचारितफलत्वादिति भावः । शास्त्रैः सह काव्यस्य सम्बन्धमाह—**तद्धि शास्त्राण्यनुधावतीति** । तद्धि=काव्यम् शास्त्राण्यनुधावति, अनुगच्छतीत्यर्थः । "शास्त्रपूर्वकत्वात् काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत" इति स्वयमेव पूर्वं कथनात् शास्त्रकाव्ययोरनुगम्यानुगन्तृभावः स्पष्टं प्रतीयते । पराऽभिमतं विद्यास्थानानामष्टादशत्वमाह—**वार्तेति** । वार्ता, कामसूत्रम्, शिल्पशास्त्रम्, दण्डनीतिश्चेति पूर्वोक्तैश्चतुर्दशविद्यास्थानैर्मिलित्वा ऽष्टादशविद्यास्थानानि भवन्तीत्यपरेषां

रिति पूर्वैः सहाष्टादश विद्यास्थानानि" इत्यपरे। आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः। "दण्डनीतिरेवैका विद्या" इत्यौशनसाः। दण्डभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते। "वार्त्ता दण्डनीतिर्द्वे विद्ये" इति बार्हस्पत्याः। वृत्तिर्विनयग्रहणं च स्थितिहेतुर्लोकयात्रायाः। "त्रयीवार्त्तादण्डनीतयस्तिस्रो विद्याः" इति मानवाः। त्रयी हि वार्त्तादण्डनीत्योरुपदेष्ट्री। "आन्वीक्षिकीत्रयीवार्त्ता-

---

मतम्। वार्तादीना स्वरूपमग्रे वक्ष्यते। चतस्र एव विद्या इति पक्षान्तरमाह—**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः।** इति। औशनसानां मतमाह–**दण्डनीतिरेवैका विद्येति।** सर्वा अपि विद्यास्तदधीना इति तात्पर्यम्। अवधारणस्य हेतुमाह–**दण्डभयादिति।** कृत्स्नः=सकलः। स्वस्वकर्मपरित्यागे दण्डो भवेदिति भीत्यैव सर्वोऽपि लोकः स्वस्वकर्मतत्परो भवति। इति सर्वासामपि विद्यानामुन्नत्यै प्रसाराय च दण्ड एव प्रभवतीत्युक्तं दण्डनीतिरेवैका विद्येति। बार्हस्पत्यानां मतमाह–**वार्तादण्डनीतिर्द्वे विद्ये इति।** कृषिपाशुपाल्यवणिज्यात्मिका वार्ता विना वित्तलाभस्याऽसम्भवात् वित्ताधीनैव लोकयात्रेति हेतोर्वार्ता दण्डनीतिश्चेति द्वे विद्ये इति बार्हस्पत्या आहुः। तदेव विशदयन्नाह—**वृत्तिर्विनयग्रहणं चेति।** वृत्तिः=जीवननिर्वाहौपयिकी वेतनादिलब्धिः। विनयग्रहणम्=शिक्षाग्रहणम्, गुर्वादिसमुचिताचारव्यवहारज्ञानमित्यर्थः तदेतद्द्वयमपि लोकयात्रायाः स्थितिहेतुः। अनेन विना लोकयात्रा न सम्यक् चलतीत्यर्थः। मानवानां मतमाह—**त्रयीत्यादिना**—त्रयी=ऋग्यजुःसामाख्यवेदत्रयी। अङ्गसहितेति फलितम्। 'ब्राह्मणेन निष्कारण षडङ्गो वदोऽध्येयो ज्ञेयश्चे' त्युक्तेस्त्रय्या अध्ययनन्तु फलानुसन्धानमन्तरैव कर्त्तव्यमापतति। वार्त्ता दण्डनीतिश्चाऽपि लोकयात्रार्थं परमावश्यके इति तिस्रो विद्या इति मानवाः साङ्गिरन्ते। त्रय्याः प्राधान्यमाह–**त्रयी हीति।** वार्ता दण्डनीतिश्च किं स्वरूपा किं भेदेत्याद्युपदेशकरणसामर्थ्यमहिम्ना त्रय्याः प्राधान्य सुस्पष्टमेव। कौटिल्यस्य मतमाह—**आन्वीक्षिकीत्यादिना**–आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्या इति कौटिल्यस्य मतम्। तत्र

**दण्डनीतयश्चतस्रो विद्याः" इति कौटिल्यः। आन्वीक्षिक्या हि विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवति । "पञ्चमी साहित्यविद्या" इति**

---

"त्रयीविशेषो ह्यान्वीक्षिकीति । संवरणमात्रं हि त्रयी लोकयात्राविद इति । साङ्ख्य योगो लोकायतं चेत्यान्वीक्षिकी । धर्माधर्मौ त्रय्याम् । अर्थानर्थौ वार्तायाम् । नयानयौ दण्डनीत्याम् । बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति । व्यसनेऽभ्युदये च बुद्धिमवस्थापयति । प्रज्ञावाक्यक्रियावैशारद्यं च करोति ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता" ॥

इति **कौटिलीयेऽर्थशास्त्रे** । पूर्वोक्तस्वरूपयाऽऽन्वीक्षिक्या विवेचिता त्रयी वार्तादण्डनीत्योः प्रयोगे साहाय्यं सम्पादयतीत्याह—**आन्वीक्षिक्या हि विवेचिता त्रयीत्यादिना—**

अथाऽयमत्र सङ्ग्रहः **कामन्दकीयनीतिसारे—**

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥
त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या हि मानवाः ।
त्रय्या एव विभागोऽय येयमान्वीक्षिकी मता ॥
वार्ता च दण्डनीतिश्च द्वे विद्ये इत्यवस्थिताः ।
लोकस्यार्थप्रधानत्वाच्छिष्याः सुरपुरोधसः ॥
एकैव दण्डनीतिस्तु विद्येत्यौशनसाः स्थिताः ।
तस्या हि सर्वविद्यानामारम्भाः सम्प्रतिष्ठिताः ॥
विद्याश्चतस्र एवैता इति नो गुरुदर्शनम् ।
पृथक्पृथक् प्रसिद्ध्यर्थं यासु लोको व्यवस्थितः ॥
आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां तथेतराः ॥
आन्वीक्षिका त्रयी वार्ता सतीर्विद्याः प्रचक्षते ।

चतस्रो विद्या इति कौटिल्यसिद्धान्तेऽधिकं योजयन्नाह—**पञ्चमी साहित्यविद्येति । सा हीति** सा=साहित्यविद्या हि चतसृणामपि आ-

ावरीयः । सा हि चतसृणामपि विद्यानां निष्यन्दः । आभिर्धर्मार्थौ य-
द्विद्यात्तद्विद्यानां विद्यात्वम् । तत्र त्रयी व्याख्याता । द्विधा चान्वीक्षि-
की पूर्वोत्तरपक्षाभ्याम् । अर्हद्भदन्तदर्शने लोकायतं च पूर्वः पक्षः । साङ्ख्यं
न्यायवैशेषिकौ चोत्तरः । त इमे षट् तर्काः । तत्र च तिस्रः कथा भव-
न्ति वादो, जल्पो, वितण्डा च । मध्यस्थयोस्तत्त्वावबोधाय वस्तुत-

---

न्वीक्षिकीत्रयीवार्तादण्डनीतीनां विद्याना निष्यन्दः=अन्तःसाररूपः प्रपा-
नकरसन्यायेन चर्व्यमाणस्वभावो रसविशेषः, अत एव रसिकैरविरतमास्वाद्यमा-
नत्वेनापरोक्षत्वादुपादेयैव । विद्याना विद्यात्वं परिष्कुर्वन्नाह—आभिरिति । आ-
भिः पूर्वोक्ताभिर्विद्याभिः करणभूताभिः प्रमाणभूताभिर्वा धर्मार्थौ ज्ञायेते इति
वेदनक्रियावत्त्वात्ताः सकला अपि विद्या एव । धर्मार्थवित्तिप्रयोजकत्व विद्या-
त्वमिति फलितम् । तथा च न्यायमञ्जर्यां जयन्तः—वेदन विद्या, तच्च
न घटपटादिवेदनमपि तु पुरुषार्थसाधनवेदनम् । तत्र=तासु विद्यासु । त्रयी=
ऋग्यजुःसामात्मकवेदत्रयी । व्याख्याता=पूर्वमेव स्वरूपतो लक्षितेति भावः ।
आन्वीक्षिकीं विभजते—द्विधेति । पूर्वपक्षान्वीक्षिकी, उत्तरपक्षान्वीक्षिकीति वि-
धाद्वयेनेति भाव. । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षाऽनुमानमित्यर्थः ।
तद्व्युत्पादकं शास्त्रमान्वीक्षिकमिति आन्वीक्षिक्याः स्वरूपम् । तत्रपूर्वपक्षमाह—
अर्हद्भदन्तदर्शने इति । अर्हद्दर्शनं भदन्तदर्शनम्=जैनदर्शनं, बौद्धदर्श-
न चेत्यर्थः । लोकायतम्=चार्वाकदर्शनम् । लोके आयतं विस्तृत रमणीयत्वादिति
तत् । इत्थमुक्तदर्शनत्रयमवैदिकमनीश्वरमिति स एष पूर्वः पक्षः । उत्तरपक्षमाह—
साङ्ख्यमिति । प्रधानपुरुषवादात्मक—कापिल दर्शनमित्यर्थः । न्यायो=
गौतमप्रणीत तर्कशास्त्रम् । वैशेषिक=विशेषपदार्थाभ्युपगन्तुः कणादस्य द-
र्शनमित्यर्थः । इत्थमिदं दर्शनत्रयमंशतो वेदानुसारि सेश्वरमित्युत्तरः पक्षः ।
पूर्वोत्तरपक्षौ मिलितावेव त इमे षट् तर्काः=विचारशास्त्राणि भवन्ति । सन्दि-
ग्धेऽर्थेऽन्यतरपक्षानुकूलकारणदर्शनात् तस्मिन् सम्भावनाप्रत्ययस्तर्कः । इति
तर्कसामान्यलक्षणम् । विचारशास्त्रे च तिस्रः कथा भवन्ति, वादो जल्पो
वितण्डा च । तत्र वादमाह—मध्यस्थयोरिति । मध्यस्थयोः=अन-
धिगततत्त्वयोरित्यर्थः । तत्त्वावबोधाय=यथार्थवस्तस्वरूपावगतये । वस्त-

स्वपरामर्शो वादः । विजिगीषोः स्वपक्षसिद्धये छलजातिनिग्रहादिपरिग्रहो जल्पः । स्वपक्षस्यापरिग्रहित्री परपक्षस्य दूषयित्री वितण्डा । कृषिपाशुपाल्ये वणिज्या च वार्त्ता । आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डस्तस्य नीतिर्दण्डनीतिः । तस्यामायत्ता लोकयात्रेति शास्त्राणि । सामान्यलक्षणं चैषाम्—

सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः ।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः ॥

---

तत्त्वस्य परामर्शो विचार एव वाद इत्यर्थः । वीतरागवस्तुनिर्णयफलो वाद इत्यन्यत्र । जल्पमाह—**विजिगीषोरिति** । वादकाले स्वपक्षस्य विजयमिच्छता पुरुषेण छलस्य जातेर्निग्रहस्य, आदिपदादुपायान्तरस्यापि परिग्रहः स्वीकारो जल्प इत्यर्थ. । विजिगीषुकथा पुरुषशक्तिपरीक्षाफला जल्प इत्यन्यत्र । तद्विशषो वितण्डा इत्यपि तत्रैव । स्वमतेन वितण्डामाह—**स्वपक्षस्येति** । यदा वक्ता स्वपक्षं दुर्बलं मत्वा तत्परिग्रहे मन्दादरः सन्नेव परपक्षमात्रं दूषयितुमुपक्रमते तदा सा वितण्डा भवतीत्यर्थः । तत्र अर्थविकल्पैर्वचनविघातश्छलम् । हेतुप्रतिबिम्बनप्रायं प्रत्यवस्थान जातिरित्यादिलक्षणानि ग्रन्थान्तरादवसेयानि । वार्तामाह—**कृषीति** । कृषिः पाशुपाल्यं वाणिक्कर्म च वार्तेत्यर्थः ।

पूर्वोक्तलक्षणानामान्वीक्षिकीत्रयीवार्त्तानां निर्बाधप्रचारस्य साधनं दण्ड एव तद्व्यवस्थापिका राज्ञो नीतिरेव दण्डनीतिः । राजदण्डभयादेव सर्वस्य लोकस्य सुव्यवस्थितत्वात् सुव्यवस्थितलोकाधीनत्वाच्चैव शास्त्राध्ययनस्य लोकयात्रा शास्त्राणि च दण्डनीत्यधीनानीति सिद्धम् । तथा च 'दण्डनीतिरेवैका विद्ये' त्यौशनसानां मतं समर्थितं भवति । एषां=शास्त्राणाम् । सामान्यलक्षणं=स्वरूपपरिचयमाह—**सरितामिवेति** । यथा सरितां नदीनां प्रवाहाः ओघाः प्रथमं पूर्वमुद्गमकाले इत्यर्थः । तुच्छाः अल्पाः भवन्ति । अथ यथोत्तरं=उत्तरोत्तरं नद्यन्तरसम्भेदादिना विपुला महान्तो भवन्ति, एवमेव ये शास्त्रसमारम्भाः पूर्वमल्पस्वरूपाः क्रमशो महिमानं प्रकटयन्ति, त एव लो-

सूत्रादिभिश्चैषां प्रणयनम् । तत्र सूत्रणात् सूत्रम् । यदाहुः—

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः ॥"

सूत्राणां सकलसारविवरणं वृत्तिः । सूत्रवृत्तिविवेचनं पद्धतिः । आक्षिप्य भाषणाद्भाष्यम् । अन्तर्भाष्यं समीक्षा । अवान्तरार्थविच्छे-

---

कस्य वन्द्या आदरणीया भवन्ति । गोमुखानि शास्त्राणि लोकप्रियाणि भवन्ति नतु व्याघ्रमुखानीति तात्पर्यम् । शास्त्रप्रणयनप्रकारमाह—**सूत्रादिभिरिति** । एषां शास्त्राणां सूत्रादिभिः, आदिपदात् श्लोकसहितादिभिरपी-त्यर्थः । प्रणयनं निमार्णम् । सूत्रमाह—**तत्रेति** । सूत्रणात् सूत्रम् । सूत्रयति=वक्तव्यार्थं बीजरूपेण सूचयतीति तदित्यर्थः । सूत्रलक्षणमाह—**अल्पाक्षरमिति** । सूत्रकृतो महर्षय इत्थम्भूतं सूत्रं विदुरित्यन्वयः । तदेव विशिनष्टि—**अल्पाक्षरमित्यादिना** । यत्, अल्पाक्षरं, अल्पैर्मितैरक्षरैर्ग्रथितम्, इत्थमपि सन्देहरहितम्, अल्पाक्षरत्वे सन्देहस्यावसरादिति भावः । सारवत्=अर्थगाम्भीर्यात्मकसारसहितम् । विश्वतोमुखम्=चतुरस्रमित्यर्थः । सर्वत्र सुलभान्वयमिति तात्पर्यम् । स्तम्भनं स्तोभः तद्रहितम् । अर्थप्रतीतिप्रतिबन्धात्मकस्तम्भनरहितमित्यर्थः । अथवा निरर्थकपदरहितमित्यर्थः । अनवद्यम्=च्युतसंस्कृतिलोकशास्त्रविरुद्धत्वादिसकलदोषरूपाऽवद्यवर्जितमित्यर्थः । एवं लक्षणं सूत्रं सूत्रकृदभिमतमिति तात्पर्यम् । अथ वृत्तिमाह—**सूत्राणामिति** । सूत्राणामिति सम्बन्धे षष्ठी । तथा च सूत्रसम्बन्धिसकलसारांशस्य यत्र विवरणं व्याख्यानं वर्तते सा वृत्तिरित्यर्थः । पद्धतिमाह—**सूत्रेति** । सूत्रस्य वृत्तेश्च तात्पर्यं विचार्य इतिकर्त्तव्यताप्रकारो यत्र निबध्यते सा पद्धतिरित्यर्थः । **आक्षिप्येति** । सूत्रार्थं प्रतियोगिविधयाऽऽक्षिप्य=पूर्वपक्षत्वेन सन्दूष्य, भाषणं=उत्तरपक्षत्वेन सिद्धान्तप्रवचनं यत्र क्रियते तद्भाष्यमित्यर्थः । समीक्षामाह—**अन्तरिति** । भाष्यस्य अन्तः, अन्तर्भाष्यम्, भाष्यमध्ये इत्यर्थः । या समीक्षा=विचारः सैव समीक्षेत्यर्थः । तस्या एव रूपान्तरमाह—**अवान्तरेत्यादिना** । अवान्तरस्य=प्रकरणमध्यवर्तिनोऽर्थस्य वक्तव्यांशस्य विच्छेदः पृथक्करणमपि सा=समीक्षेत्यर्थः । टीकामाह—

दश्च सा। यथासम्भवमर्थस्य टीकनं टीका। विषमपदभञ्जिका पञ्जिका। अर्थप्रदर्शनकारिका कारिका। उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमिति शास्त्रभेदाः।

भवति प्रथयन्नर्थं लीनं समभिप्लुतं स्फुटीकुर्वन्।
अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः॥

शास्त्रैकदेशस्य प्रक्रिया प्रकरणम्। अध्यायादयस्त्ववान्तरविच्छेदाः। कृतिभिः स्वतन्त्रतया प्रणीता इत्यपरिसङ्ख्येया अनाख्येयाश्च।

---

**यथासम्भवमिति**। यथासम्भवम्=सम्भावनामनतिक्रम्येत्यर्थः। अर्थस्य=शब्दार्थस्य टीकनं=प्रकाशन टीकेति तात्पर्यम्। यावतां शब्दाना सम्भवतोऽर्थस्य प्रकाशनं टीकेति निष्कर्षः। पञ्जिकामाह—**विषमेति**। विषमाणां=दुरूहाणां पदाना भञ्जिका अर्थप्रकाशनेन पार्थक्यप्रदर्शिका पञ्जिकेत्यर्थः। कारिकामाह—**अर्थेति**। सूत्रगतार्थप्रदर्शनकारिका छन्दोबद्धा वाक् कारिकेत्यर्थः। वार्त्तिकमाह—**उक्तानुक्तेति**। सूत्रकृता भ्रमप्रमादादिवशात् येऽर्था उक्ता, अनुक्ता, दुरुक्ताश्च, तेषा चिन्ता विचारो यत्र तद्वार्त्तिकमित्यर्थः। इत्थमेते शास्त्राणा तदवान्तरांशाना च भेदाः प्रकटिताः।

शास्त्रकवेः प्रभावं प्रदर्शयति—**भवतीति**। यः लोकोत्तरबुद्धिशाली कविः लीनं=गुप्तमभिप्रेतमर्थं वाच्यं प्रथयन् भवति=प्रथयति, प्रकटयतीत्यर्थः। एवं समभिप्लुतं=समन्तात् अभिप्लुतं वाच्यान्तरसम्बन्धेन सन्दिग्धार्थं स्फुटीकुर्वन् भवति स्पष्टीकुरुते इत्यर्थः। किञ्च अल्पं=सङ्क्षिप्तं, अनल्पं विस्तृतं रचयन्, अनल्पं=विस्तृत, अल्पं सङ्क्षिप्तं रचयन् समासव्यासरचनाकुशल इत्यर्थः। गुप्तमभिप्रायं प्रकटयति, सन्दिग्धार्थं च स्पष्टीकुरुते। समासव्यासरचनयोश्च पाटवं प्रकटयति यः स शास्त्रकविरिति तात्पर्यम्।

अथ प्रकरणमाह—**शास्त्रैकदेशस्येति**। अनेकप्रकरणयुक्तस्य शास्त्रस्य य एकदेशस्तस्य या प्रक्रिया प्रकारस्तदेव प्रकरणमित्यर्थः। अवान्तरविच्छेदानाह—**अध्यायादय इत्यादिना**। मध्ये मध्ये प्रयोजनवशाद्विहिता अवान्तरविच्छेदा एवाऽध्यायादयः। ते च परिच्छेदोच्छ्वाससमुल्लासादिभिर्नामभिरनेकैर्ग्रन्थकारैरनेकधा परिकल्पिताः। अत एव ते अपरि

शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या । उपविद्यास्तु चतुःषष्टिः । ताश्च कला इति विदग्धवादः । स आजीवः काव्यस्य । तमौपनिषदिके वक्ष्यामः ।

इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः ।
त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात् ॥ १०

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
द्वितीयोऽध्यायः शास्त्रनिर्देशः ।

---

सङ्ख्येयाः । प्रयोजनान्तराभावादनाख्येयाश्च । अथ साहित्यविद्यां लक्षयन्नाह--**शब्दार्थयोरिति** । शब्दार्थयोर्वाच्यवाचकयोर्यथासहभावेन साहचर्येणोपलक्षिता विद्या साहित्यविद्येत्यक्षरार्थः । शब्दार्थौ सहितौ काव्यमित्याद्यभियुक्तोक्तेः सहितयोर्भावः साहित्यमिति समाख्याबलाच्च साहित्यविद्यैव काव्यशास्त्रमिति फलितम् । इयं खलु मुख्याविद्या । उपविद्या आह--**उपविद्यास्त्विति** । मुख्यविद्यामुपजीव्य प्रवृत्ता उपविद्याः । परिगणनमाह--**चतुःषष्टिरिति** । चतुःषष्टिसङ्ख्याका इत्यर्थः । चतुःषष्टिकला इति यावत् । तदेव स्पष्टीकुर्वन्नाह--**ताश्चेति** । ताश्च=चतुःषष्टिरुपविद्याः, कलाशब्दवाच्या इति विदग्धानां रसिकानां वाद उक्तिरित्यर्थः । सः=विदग्धवादः । काव्यस्य=शब्दार्थात्मकस्य आजीवो जीवनोपायभूतः । काव्यस्य वैदग्ध्यमूलत्वात् । तदेतदखिलमौपनिषदिकेऽध्याये वक्ष्यते ।

उपसंहरति--**इत्यनन्त इति** । अभियुक्तानां पण्डितानां, अत्र शास्त्रे, संरम्भविस्तरः=संरंभे प्रकरणाध्यायपर्यालोचनादौ यो विस्तरः सः निपुणा धीर्बुद्धिर्येषां तेषां गम्यः सुज्ञेयः, अतः त्यक्तः=परिहृतः, न विशेषेण विवेचित इत्यर्थः । कुतः ? ग्रन्थस्य यद्गौरवं गुरुत्वं तदेव कारणं तस्मात् ग्रन्थगौरवं मा भूदिति हेतोरित्यर्थः ।

इति श्रीमदखिस्तेवंशसम्भूत भैरवनायकतनूजनि-नारायणशास्त्रिप्रणीतायां
काव्यमीमांसा-चन्द्रिकायां शास्त्रनिर्देशो नाम द्वितीयोऽध्यायः॥ २ ॥

## तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः ।

एवं गुरुभ्यो गिरः पुण्याः पुराणीः शृणुमः स्म, यत्किल धिषणं शिष्याः कथाप्रसङ्गे पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुः ? इति । स तान् बृहताम्पतिरूचे ।

पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास । प्रीतेन मनसा तां विरिञ्चिः प्रोवाच—पुत्रं ते सृजामि । अथैषा काव्यपुरुषं सुषुवे । सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत्—

यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्त्तते ।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ ॥

अस्मिन्नध्याये काव्यपुरुषस्योत्पत्तिः, तस्य साहित्यविद्यावधूप्राप्तिः, दम्पत्योर्दिग्विजयप्रयाणम्, विविधवृत्तिप्रवृत्तीनां प्रसरणम्, देशभाषावेषभेदादीनां कथन च समासेन भविष्यति । तत्र काव्यपुरुषोत्पत्तिमुपक्रममाणो ग्रन्थकृत् काव्यपुरुषान्तेवासिनो धिषणस्य मुखात्तदुपक्रमं चिकीर्षन्नाह—**एवमिति** । यद्वयं वक्ष्यामो, न तत्स्वकपोलकल्पितम्, अपि तु सद्गुरुसम्प्रदायागतमिति सुतरां विश्वासार्हमिति बोधयन्नाह—**गुरुभ्य इत्यादि** । **धिषणम्**=बृहस्पतिम् । **सारस्वतेयः**=सरस्वतीपुत्रः । **बृहताम्पतिः**=बृहस्पतिः । **पुत्रीयन्तीति** । पुत्रं कामयमानेत्यर्थः । **तुषारगिरौ**=हिमवत्पर्वते । **सपादोग्रहमिति** । पादावुपगृह्येत्यर्थः । नमस्कार पूर्वकमिति यावत् । **छन्दस्वतीमिति** । छन्दोबद्धामित्यर्थः । **उदचीचरत्**=उच्चारितवान् । तामेव वाचमाह—**यदेतदिति** । हे अम्ब ! मातः ! सरस्वति ! अहं काव्यपुमान्=काव्यपुरुषः, **तावकौ**=त्वत्सम्बन्धिनौ, त्वदीयावित्यर्थः । **पादौ**=चरणौ, **वन्देय**=नमस्कुर्याम् । पूर्वार्द्धेन काव्यपुरुषं विशिनष्टि-शब्दार्थौ मिलित्वैव काव्यमिति प्राचामाचार्याणां सिद्धान्तः । तदनुसारेणैव प्रकृतेऽपि, **यदेतत्**=पुरो दृश्यमानं विश्वं, प्रथमतो वाङ्मयं=शब्दात्मकं, पश्चात् **अर्थमूर्त्या**=अर्थरूपेण **विवर्तते**=विवर्तरूपेण प्रकटीभवति । अस्मीति विभक्तिप्रतिरूपकमव्ययम्, अहमित्यर्थः । एतेन शब्दार्थात्मना वाङ्मयेन स्वस्याभेदः साधितः । शब्दार्थाभिन्नवाङ्म-

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससम्भ्रमदङ्कपर्यङ्केनादाय तमुदलापयत् । "वत्स सच्छन्दस्काया गिरः प्रणेतर्वाङ्मयमातरमपि मातरं मां विजयसे । प्रशस्यतमं चेदमुदाहरन्ति यदुत 'पुत्रात्पराजयो द्वितीयं पुत्रजन्म' इति । त्वत्तः पूर्वे हि विद्वांसो गद्यं ददृशुर्न पद्यम् । त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति । अहो श्लाघनीयोऽसि । शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम् । समः प्रसन्नो मधुर उदार ओजस्वी चासि । उक्तिचणं च ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लिकादिकं च वाकेलिः, अनुप्रासोपमादयश्च त्वामलङ्कु-

यामिन्नः काव्यपुरुषोऽहमिति फलितम् । **आम्नायदृष्टचरीमिति** । आम्नायेषु, वेदेषु दृष्टचरीम्=पूर्वं दृष्टाम् । वेदेष्वेव प्रयुक्तामित्यर्थः । भूतपूर्वे चरट् । **भाषाविषये इति** । वेदातिरिक्तलौकिकभाषास्वित्यर्थः । **छन्दोमुद्रामिति** । प्रकृते ऽनुष्टुप्छन्दोनिबन्धनमिति भावः । देवी=सरस्वती । ससम्भ्रमम्=सहर्षमित्यर्थ. । अङ्कपर्यङ्केनादाय=उत्सङ्गात्मके तल्पे संस्थाप्येत्यर्थः । तम्=काव्यपुरुषम्, स्वपुत्रम् । उदलापयत्=प्रशशंसेतिभावः । उल्लापनमाह—**वत्सेति** । **सच्छन्दस्काया इति** । छन्दोबद्धाया इत्यर्थः । वाङ्मयमातरम्=वाङ्मयस्य, सकलस्य वाक्प्रपञ्चस्य मातर जननीमपि तव काव्यपुरुषस्य मातरं जननीं मा विजयसे, मया ऽननुभूतपूर्वां छन्दस्वतीं गिर प्रकाश्य मा पराभवसीत्यर्थः । भाषाविषये छन्दोमुद्रायाः पूर्वमभावं दर्शयति—**त्वत्त इति** । त्वत्त'=भवतः, पूर्वे=प्राचीनाः । **त्वदुपज्ञमिति** । त्वत्प्रथमारम्भमित्यर्थः । **छन्दस्वद्वचः**=छन्दोबद्धं वचनमित्यर्थः । साश्चर्यं काव्यपुरुषावयवसंस्थानमाह—**अहो श्लाघनीयोऽसीत्यादिना** । ते=तव, शब्दार्थौ शरीरम् । शब्दार्थात्मकमेव तव काव्यपुरुषस्य वपुरित्यर्थः । संस्कृतं मुखमित्यादिना च तत्तदवयवसंस्थानं प्रदर्शितम् । **मिश्रमिति** । प्राकृतावान्तरभाषामिश्रणात्मकमित्यर्थः । **समः**=समताख्यप्राचीनाभिमतगुणविशिष्ट इत्यर्थः । एवं प्रसादगुणविशिष्टः प्रसन्न इत्याद्यवसेयम् । **प्रश्नोत्तरमिति** । प्रश्नश्चोत्तर च तत्, प्रश्नोत्तरा

वन्ति । भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिष्टौति—

चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां(र्त्या)माविवेश ॥

"तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचितं चेष्टस्व" इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातुमभ्रगङ्गां जगाम । तावच्च कुशान् समिधश्च समाहर्तुं निःसृतो महामुनिरुशनाः परिवृत्ते पूषण्युष्मोपप्लुतं तमद्राक्षीत् । कस्यायमनाथो बाल इति चिन्तयन्स्वमाश्रमपदमनैषीत् । क्षणादाश्वस्तश्च स सारस्वतेयस्तस्मै छन्द-

---

त्मकं काव्यमित्यर्थः । यद्वा य एव प्रश्नः स एव पदच्छेदवैशिष्ट्यादुत्तरं यत्र तत् । **प्रवह्लिकादिकमिति** । प्रहेलिकादिकमित्यर्थः । एतत्सर्वं तव काव्यपुरुषस्य वाक्क्रीडनमिति यावत् । **भविष्यत इति** । कालान्तरे समुत्पत्स्यमानस्येत्यर्थः । **अर्थस्य**=वस्तुनः । **अभिधात्री**=प्रतिपादिका । इत्थंभूता श्रुतिरपौरुषेयी वागपि त्वा स्तौति ।

ता श्रुतिमाह—**चत्वारीति** । ऋग्वेदसंहितायां तृतीयाष्टकेऽष्टमाध्याये दशममण्डले तृतीय सूक्तमिदम् । अस्यार्थश्च सायणभाष्ये, निरुक्ते, महाभाष्ये पस्पशान्हिके च तत्तत्प्रकरणानुरोधेन मिथो विलक्षण एव कृतः ।

अस्मिन् ग्रन्थे राजशेखरेण च काव्यपुरुषपरतयैव व्याख्यातः । भरतेन च स्वकीये नाट्यशास्त्रे काव्यविषये यथोक्तं, तदनुरोधेनैवासौ ऋक् काव्यपुरुषपरतया व्याख्यायते । यथा—शृङ्गस्थानीयाश्चत्वारो वर्णाः । पादस्थानीयानि त्रीणि स्थानानि । शीर्षस्थानीयो द्विविधः काकुरिति । हस्तस्थानीयाः सप्त स्वराः । ईदृशोऽसौ वृषभः काव्यपुरुषः त्रिधा=त्रिप्रकारैः, मन्दमध्योच्चैः स्वरैः बद्धः=उच्चारितः सन् रोरवीति शब्दायते । एवंभूतो महानसौ देवो मर्त्यान् आविवेश । मर्त्येषु प्रविष्ट इत्यर्थः । इत्थं स्तुत्वा लोकव्यवहारासिद्ध्यर्थं लोकानुसारि वर्तनमावश्यकमिति तमाह—**तथाऽपीति** । संवृणु=गोपायेत्यर्थः । **परिवृत्ते पूषणीति** । मध्यान्होत्तरं सूर्यपरावर्तने सतीत्यर्थः । **छन्दस्वतीं वाचं समचारयदिति** । छन्दोबद्धां वाचं तस्मिन् सञ्चारितवानिति भावः । तादृशवाक्सञ्चारणेन स्वयं विस्मितः परानपि विस्माप-

स्वतीं वाचं समचारयत्। अकस्माद्विस्मापयन्स चाभ्युवाच—

या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम्।
हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती॥ इति।

तत्पूर्वकमध्येतॄणां च सुमेधस्त्वमादिदेश। ततः प्रभृति तमुशनसं सन्तः कविरित्याचक्षते। तदुपचाराच्च कवयः कवय इति लोकयात्रा। कविशब्दश्च कवृ वर्ण इत्यस्य धातोः काव्यकर्मणो रूपम्। काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुञ्जते। ततश्च विनिवृत्ता वाग्देवी तत्र पुत्रमपश्यन्ती मध्येहृदयं चक्रन्द। प्रसङ्गागतश्च वाल्मीकिर्मुनिवृषा समश्रयं तमुदन्तमुदाहृत्य भगवत्यै भृगुसूतेराश्रमप-

---

यन् स उशना अपि तत. परमुवाच। यदुवाचोशनास्तदाह—या दुग्धेति। या सरस्वती कवय एव दोग्धारो दोहकास्तैरन्वह प्रतिदिन दुग्धाऽपि कृतदोहनाऽपि शब्दार्थाहरणैः कृतोपयोगाऽपीत्यर्थः। न दुग्धेव अकृतदोहनेव शब्दार्थसामग्रीपरिपूर्णैवास्ते। यस्याः शब्दार्थनिधिरक्षय इति भावः। सा= इत्थंभूता सूक्तीनां सदुक्तीनां धेनुः कामगवीस्वरूपा सरस्वती नः=अस्माकं हृदि सन्निधत्ता=सान्निध्य कल्पयतु। सर्वदाऽस्मद्धृदये स्फुरत्वित्यर्थः। एतन्मन्त्रस्य फल प्रदर्शयन्नाह—तत्पूर्वकमिति। या दुग्धेत्यादिश्लोकमन्त्रपूर्वकमित्यर्थः। **अध्येतॄणां**=विद्याभ्यासं कुर्वताम्। **सुमेधस्त्वम्**= शोभनबुद्धिमत्त्वम्। या दुग्धेत्यादिछन्दस्वद्वचःप्रवृत्त्यनन्तरमेव भार्गवं कविरित्याख्यया लोका ऊचिरे। तथा च मुख्यया वृत्त्या कविशब्दस्य भार्गव एव प्रयोगः। कथ तर्हीतरे कवय इति चेदाह—**तदुपचाराच्चेति**। भार्गवादन्यत्र कविशब्द उपचारादर्थाल्लक्षणयैव प्रयुज्यते। तथा च छन्दोमयीं गिरं प्रयुञ्जानाः सर्वेऽपि कवय इति लोकव्यवहारः। कविशब्दव्युत्पत्तिमाह— **कविशब्दश्चेति**। कवृवर्णे इत्यस्माद्धातो. कविरिति शब्दो निष्पन्नः। **काव्यकर्मण इति**। धातोरित्यस्य विशेषणमिदम्। काव्य कर्म यस्येति तस्माद्धातोरित्यर्थ.। सारस्वतेये पुरुषे काव्यशब्दप्रवृत्तिनिमित्तमाह—**काव्यैकरूपत्वाच्चेति**। काव्येन सह तादात्म्यापन्नत्वात् सारस्वतेये पुरुषे काव्यपुरुष इत्यौपचारिक' प्रयोग इत्यर्थ। मध्ये विच्छिन्नं कथासन्दर्भं भूयः संयोजयन्नाह= **ततश्चेति**। **विनिवृत्तेति**। अभ्रगङ्गास्नानादिति शेषः।

दमदर्शयत् । सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि च चुम्बन्ती स्वस्तिमता चेतसा प्राचेतसायाऽपि महर्षये निभृतं सच्छन्दांसि वचांसि प्रायच्छत् । अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणक्रेङ्कारया गिरा, क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात्, यदुतान्यदनधीयानो यः प्रथममेनमध्येष्यते स सारस्वतः कविः संपत्स्यत इति । स तु महामुनिः प्रवृत्तवचनो रामायणमितिहासं समदृभत्, द्वैपायनस्तु श्लोकप्रथमाध्यायी तत्प्रभावेन शतसाहस्रीं संहितां भारतम् । एकदा तु ब्रह्मर्षिवृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान्देवः स्वयम्भूस्तामिमां निर्णेत्रीमुद्दिदेश । उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज । वत्स परमेष्ठिनाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठान्न्यवर्तयदेनमात्मना तु प्रववृते । ततः स काव्यपुरुषो रुषा निश्च-

---

मुनिश्रेष्ठ इत्यर्थः । **उदन्तमिति** । वृत्तान्तमित्यर्थः । **भृगुसूतेरिति** । भार्गवस्य शुक्रस्येत्यर्थः । **अङ्कपालीं ददानेति** । उत्सङ्गमारोपयन्तीत्यर्थः । **स्वस्तिमता चेतसेति** । निश्चिन्तेन चित्तेनेत्यर्थः । **प्राचेतसायाऽपि महर्षये इति** । महर्षये वाल्मीकये इत्यर्थः । **मा निषादेति** । हे निषाद ! हे व्याध ! त्वं शाश्वतीः **समाः**=चिरकालमित्यर्थः । **प्रतिष्ठां मा अगमः**=स्थितिं न लभस्व । चिरायुर्न भव । शीघ्रं म्रियस्वेत्यर्थः । शापस्य हेतुमाह—**यदिति** । यत् यस्मात्कारणात् त्वं क्रौञ्चमिथुनात् क्रौञ्ची च क्रौञ्चश्चेति तयोर्मिथुनात् । तयो द्वन्द्वादित्यर्थः । काममोहितं मदनबाणपीडितं एक क्रौञ्च अवधीः हतवानित्यर्थः । **तत इति** । पूर्वोक्तश्लोकश्रवणानन्तरमित्यर्थः । **प्रवृत्तवचन इति** । प्रवृत्तं समुत्पन्नं वचनं श्लोकनिर्माणात्मकं यस्येत्यर्थः । **समदृभदिति** । व्यरचयदित्यर्थः । **श्रुतिविवादे इति** । श्रुतेर्वेदस्य विषये विवादे संशये समुत्पन्ने सतीत्यर्थः । आ

क्राम । प्रियं मित्रमस्य च कुमारः साक्रन्दं रुदन्नभ्यधीयत गौर्या तात तूष्णीमास्स्व साऽहमेषा निषेधामीति निगदन्ती समचिन्तयत् । प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद्बन्धनमस्ति, तदेतस्य वशीकरणं काम-पि स्त्रियं सृजामीति विचिन्तयन्ती साहित्यविद्यावधूमुदपादयदादिश-च्चैनामेष ते रुषा धर्मपतिः पुरः प्रतिष्ठते तदनुवर्त्तस्वैनं निवर्तय च । भवन्तोऽपि हन्त मुनयः काव्यविद्यास्नातकाश्चरिनमेतयोः स्तुध्वमेतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती भवानी जोषमासिष्ट । तेऽपि तथा कर्त्तुमवतास्थिरे ।

अथ सर्वे प्रथमं प्राचीं दिशं शिश्रियुर्यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः । तत्राऽभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट, स तत्रत्याभिः स्त्रीभिरन्वक्रियत । सा प्रवृत्तिरौड्रमागधी । तां ते मुनयोऽभितुष्टुवुः—

---

त्मना तु प्रवर्तते इति । स्वयं जगामेत्यर्थः । कुमार इति । कार्तिकेय इत्यर्थः । जोषमासिष्टेति । तूष्णीं बभूवेत्यर्थः । औमेयीति । उमाया अपत्यं स्त्री साहित्यविद्यावधूरित्यर्थः । यं वेषं यथेष्टमसेविष्टेति यादृशं नेपथ्यं प्रसाधनं च स्वीचकारेत्यर्थः । सा प्रवृत्ती रौड्रमागधी इति नाम्ना औड्रमागधी इति नाम्ना वा प्रसिद्धेत्यर्थः ।

अयमेवार्थः स्पष्टं प्रपञ्चितो भरतनाट्यशास्त्रे त्रयोदशाध्याये—

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥

अत्राह—प्रवृत्तिरिति कस्मात् । उच्यते—पृथिव्यां नाट्यदेशवेषभाषाचार-वार्ताः ख्यापयतीति प्रवृत्तिः, प्रवृत्तिश्च निवेदनैः । अत्राह—यदा पृथिव्यां नानादेशाः सन्ति, कथमासां चतुर्विधत्वमुत्पन्नम्, समासलक्षणश्चासां प्रयोग उच्यते । एवमेष समानलक्षणप्रयोगः । किन्तु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमते वृत्तिसंश्रितमस्य मया चतुर्विधत्वमभिहितं भारत्यार-भटी सात्त्विकी कैशिकी चेति । वृत्तिसंश्रितैश्च प्रयोगैरभिहिता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चोत्पादितः । तत्र दाक्षिणात्या भवेत्, बहु-गीतनृत्यवाद्या कैशिकीप्राया चतुरमधुरललिताङ्गाभिनया यथा ।

"आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः ।
दूर्वाप्रकाण्डरुचिरास्वगुरुपभोगाद्गौडाङ्गनासु चिरमेष चकास्तु वेषः ॥"

महेन्द्रो मलयः सह्यो मेलकः पलपिञ्जरः ।
एतेषु संश्रिता देशाः स ज्ञेयो दक्षिणापथः ॥
कोशलास्तोशलाश्चैव कलिङ्गा एव मोशलाः ।
द्रविडान्ध्रमहाराष्ट्रा वैण्या वै वानवासजाः ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥
आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीराः आनर्तास्सार्बुदेयकाः ॥
दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिका मताः ।
कुर्वन्त्यावान्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥
सात्वतीं कैशिकीं चैव वृत्तिमेषां समाश्रितः ।
भवेत्प्रयोगो नान्यत्र सर्वः कार्यः प्रयोक्तृभिः ॥
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवौड्रमागधाः ।
पौण्ड्रनैपालिकाश्चैव अन्तर्गिरिवहिर्गिराः ॥
तत्र वङ्गसमा ज्ञेया मलदा मल्लवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा ॥
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
प्रागाः प्रावृतयश्चैव युञ्जन्ति ह्यौड्रमागधीम् ॥
अन्येऽपि देशा एभ्यो ये पुराणे सम्प्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा प्रवृत्तिस्त्वौड्रमागधी ॥
पाञ्चालमध्यमायां तु सात्वत्यारभटी स्मृता ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविभ्रमः ॥
पाञ्चालाश्शौरसेनाश्च काश्मीरा हस्तिनापुराः ।
वाह्लीकाः शाकलाश्चैव मद्रकौसीनरास्तथा ॥
हिमवत्संश्रिता येच गङ्गायाश्चोत्तरा दिशम् ।
ये श्रिता वैजनपदा स्तेषु पाञ्चालमध्यमा ॥

यदृच्छयाऽपि यादृङ्नेपथ्यः स सारस्वतेय आसीत् तद्वेषाश्च पुरुषा बभूवुः । साऽपि सैव प्रवृत्तिः । यदपरं नृत्तवाद्यादिकमेषा चक्रे सा भारती वृत्तिः । तां ते मुनय इति समानं पूर्वेण । तथाविधाकल्पयाऽपि तया यद्वशंवदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परागर्भं जगाद सा गौडीया रीतिः । तां ते मुनय इति समानं पूर्वेण । वृत्तिरीतिस्वरूपं

---

इत्थं चोपर्युद्धृतैर्नाट्यशास्त्रवचनैस्तत्तद्वृत्तिप्रवृत्तिप्रभेदस्तन्मूलं च प्रपञ्चितम् । अथ पुनः क्रमेण रौद्रमागधीं प्रवृत्तिं मुनिजनस्तुतामाह—**आर्द्रार्द्रेति** । गौडाङ्गनासु एष वेषः चिरं चकास्तु इति सम्बन्धः । गौडाङ्गनाना विशेषणमाह—दूर्वाप्रकाण्डरुचिरासु—दूर्वाप्रकाण्डः=दूर्वास्तम्बः, तद्वद्रुचिरासु तन्वीषु इत्यर्थः । तत्र हेतुमाह—अगुरूपभोगात्—अगुरोश्चन्दनस्योपभोगाल्लेपनादिना सन्ततमुपयोगकरणात् । दूर्वा अपि चन्दनालिप्ते देवताशिरसि तिष्ठन्तीति अगुरूपभोगस्तत्राऽपि वर्तते इति तस्मादृश्य वर्णितम् । यद्वा दूर्वाप्रकाण्डः गुरोः शिवस्योपभोग्यो न भवति किन्तु पुत्रस्य गणेशस्येति । गौडाङ्गनापक्षे अगुरुरनुद्दामः य उपभोगस्तस्मात् हेतोः दूर्वाप्रकाण्डवद्रुचिरासु तन्वीषु कृशाङ्गीषु । उद्दामोपभोगासमर्थास्वित्यर्थः । आर्द्रार्द्रं अत्यन्तमार्द्रं चन्दनं येषु तादृशेषु कुचेषु स्तनेषु अर्पितः सूत्रयुक्तो हारो यस्मिन् सः । सीमन्तचुम्बि शिरोऽग्रभागस्पर्शि सिचयं वस्त्रं यस्मिन् सः । स्फुटं स्पष्टं दृश्यमानं बाहुमूलं भुजमूलभागो यस्मिन् सः । एवम्भूतो गौडाङ्गनावेषः चिरं चकास्तु शोभतामित्यर्थः । इत्थं च वर्णितोऽयं वेषः स्त्रीणामासीत् । अथ पुरुषा अपि तत्र किं वेषा आसन्नित्याह—**यदृच्छयेति** । सः सारस्वतेयः काव्यपुरुषो यं वेषं स्वेच्छया स्वीचकार, तत्रत्यैः पुरुषैरपि स एव वेषोऽनुकृतः । पुरुषाणां वेषे सैव रौद्रमागधी प्रवृत्तिः । अथ वृत्तिमाह—**यदपरमिति** । एषा=साहित्यविद्यावधूः । तत्र येन प्रकारेण नृत्यगीतवाद्यादिकं चक्रे सा भारती वृत्तिरिति प्रथिता बभूवेत्यर्थः । **समानं पूर्वेणेति** । अभितुष्टुवुरिति सम्बन्धः । **तथाविधाकल्पयाऽपीति** । आर्द्रार्द्रचन्दनेत्यादिपूर्वोक्तगौडाङ्गनावेषयाऽपि 'तया साहित्यविद्यावध्वा वेषप्रदर्शनमात्रेण यदा स काव्यपुरुषो वशीकर्तुं न पारितः, तदा

यथावसरं वक्ष्यामः। ततश्च स पञ्चालान्प्रत्युच्चचाल यत्र पञ्चालशूरसेनहस्तिनापुरकाश्मीरवाहीकवाह्लीकवाह्लवेयादयो जनपदाः। तत्राऽभिज्ञाना तमौमेयीति समानं पूर्वेण। सा पाञ्चालमध्यमा प्रवृत्तिः। तां मुनयोऽभितुष्टुवुः—

> ताटङ्कवल्गनतरङ्गितगण्डलेख-
> मानाभिलम्बिदरदोलिततारहारम्।
> आश्रोणिगुल्फपरिमण्डलितोत्तरीयं
> वेषं नमस्यत महोदयसुन्दरीणाम्॥

किञ्चिदार्द्रितमना यन्नेपथ्यः स सारस्वतेय आसीदिति समानं पूर्वेण। साऽपि यदीषन्नृत्तगीतवाद्यविलासादिकं दर्शयांबभूव सा सात्वती वृत्तिः। आविद्धगतिमत्त्वात्सा चारभटी। तां ते मुनय इति समानं पूर्वेण। तथाविधाकल्पयापि तया यदीषद्वशम्वदीकृत ईषदसमासं ईषदनुप्रासमुपचारगर्भं च जगाद सा पाञ्चाली रीतिः। तां ते मुनय इति समानं पूर्वेण। ततः सोऽवन्तीन्प्रत्युच्चचाल यत्रावन्तीवैदिशसुराष्ट्र

---

सा समासयुक्तं अनुप्रासयुक्तं योगार्थयुक्त च यज्जगाद, सा गौडिया रीतिरिति प्रथिता बभूव। वृत्तिरीतिस्वरूपं च ग्रन्थकृतैव यथावसरं निरूपयिष्यत इति तत्रैव तद्व्याख्यास्यते। ततः स काव्यपुरुषः पञ्चालान् नाम देशान् प्रातिष्ठत। पञ्चालान् वर्णयति—**यत्रेति**। यत्र=पञ्चालेषु। पाञ्चालादि वाह्लवेयान्ता जनपदा यत्र सन्ति ते पञ्चाला देशा इत्यर्थः। पाञ्चालमध्यमां प्रवृत्तिमाह—**ताटङ्केति**। ताटङ्कानां कर्णभूषणानां वल्गनेन दोलायितेन तरङ्गिता तरलिता गण्डलेखा=कपोलभागो यस्मिन् सः तम्। ईदृशपञ्चालदेशवासिमहाजनसुन्दरीणां वेषं नमस्यतेत्यर्थः। ईदृशनेपथ्यदर्शनस्य प्रभावमाह—**किञ्चिदार्द्रितमना इति**। पूर्वं सर्वथाऽवशम्वदोऽपि काव्यपुरुष इदानीं किञ्चिदनुकूलभावं दधावित्यर्थः **साऽपीति**। साहित्यविद्यावधूरित्यर्थः। पाञ्चालीं रीतिमाह—**ईषदसमासमिति**। किञ्चित्समस्त चेत्यर्थः। ईषदनुप्रासयुक्तं च वचो यत्र सा पाञ्चाली रीतिरिति भावः। पाञ्चालान् विहायाग्रे प्रस्थानं वर्णयन्नाह—**ततः सोऽवन्तीनिति**। सः=

मालवार्बुदभृगुकच्छादयो जनपदाः । तत्राऽभियुञ्जना तमौमेयीति समानं पूर्वेण । सा प्रवृत्तिरावन्ती । पाञ्चालमध्यमादाक्षिणात्ययोरन्तरचारिणी हि सा । अत एव सात्त्वतीकैशिक्यौ तत्र वृत्ती । तां ते मुनयोऽभितुष्टुवुः—

पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः ।
यज्जल्पितं यच्चरितादिकं तदन्योन्यसंभिन्नमवन्तिदेशे ॥

ततश्च स दक्षिणां दिशमाससाद यत्र मलयमेकलकुन्तलकेरलकालद्वरमहाराष्ट्रवङ्गकलिङ्गादयो जनपदाः । तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण । सा दाक्षिणात्या प्रवृत्तिः । तां ते मुनयोऽभितुष्टुवुः—

आमूलतो वलितकुन्तलचारुचूडश्चूर्णालकप्रचयलाञ्छितभालभागः ।
कक्षानिवेशनिबिडीकृतनीविरेष वेषश्चिरं जयति केरलकामिनीनाम् ॥

---

काव्यपुरुषः । अवन्तीन नाम देशानुच्चचाल । यत्र=अवन्तिदेशे । अवन्त्यादयो भृगुकच्छान्ता यत्र जनपदाः सन्ति सोऽवन्तिदेश इत्यर्थः । तत्र काव्यपुरुषमनुसरन्ती साहित्यविद्यावधूर्यादृशं नेपथ्यादिक विदधे सा आवन्ती प्रवृत्तिरित्यर्थः । तस्याः स्वरूपमाह—**पाञ्चालमध्यमेति** । पाञ्चालमध्यमाया दाक्षिणात्याया वृत्तेश्च मध्यगता सेत्यर्थः । **अत एव**=तादृशवृत्तिद्वयमध्यगतत्वादेव हेतोः । सात्त्विकी कैशिकी च वृत्तिस्तत्र भवति । तत्रावन्त्या प्रवृत्तौ कस्मिन्नंशे पाञ्चालमध्यमा, कस्मिन्नंशे च दाक्षिणात्येति स्पष्टीकुर्वन्नाह—**पाञ्चालनेपथ्यविधिरिति** । अवन्तिदेशे नराणां=पुरुषाणा पाञ्चालः पाञ्चालदेशानुसारी नेपथ्यविधिर्वेषव्यापारोऽस्ति, स्त्रीणा नेपथ्यविधिस्तु दाक्षिणात्यो दाक्षिणात्यानुसारी नन्दतु शोभताम् । यज्जल्पितं=भाषणादिकमित्यर्थः । यच्चरितादिकं=आचारादिक चेत्यर्थः । तत्सर्वं अन्योन्यसम्भिन्नं=मिथो मिश्रितमेव । अर्थात् भाषिते चरिते च पाञ्चालदाक्षिणात्यरीत्योर्मिश्रणमस्त्वित्यर्थः । दक्षिणा दिश वर्णयति—**ततश्चेति** । सः=काव्यपुरुषः । दाक्षिणात्यसुन्दरीवेष वर्णयति—**आमूलत इति** । अग्रभागात् पृष्ठभागादुभयतश्च दृढाकर्षणपूर्वकं बन्धनेन वलिताना परावर्त्तिताना वलिमाप्ताना वा कुन्तलानां केशाना चार्वी चूडा यस्मिन् सः । चूर्णा-

तामनुरक्तमनाः स यन्नेपथ्यः सारस्वतेय आसीदिति समानं पूर्वेण। सापि यद्विचित्रनृत्तगीतवाद्यविलासादिकमाविर्भावयामास सा कैशिकीवृत्तिस्तां ते मुनय इति समानं पूर्वेण। यदत्यर्थं च स तया वशम्वदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च जगाद सा वैदर्भी रीतिः। तां ते मुनय इति समानं पूर्वेण। तत्र वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः। "चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च, देशानां पुनरानन्त्यं तत्कथमिव कार्त्स्न्येन परिग्रहः" इत्याचार्याः। अनन्तानपि हि देशांश्चतुर्धैवाकल्प्य

---

लकाना चूर्णकुन्तलाना प्रचयेन गुच्छेन लाञ्छितोऽङ्कितो भालभागः ललाटस्थलं यत्र सः। कक्षानिवेशेन=अञ्चलस्य कक्षाप्रान्तसंयमनेन निविडीकृत निविडं बद्धो नीविर्वस्त्रग्रन्थिर्यत्र सः। इत्थमूतः केरलदेशवासिकामिनीनां वेषः चिरं जयति सर्वापेक्षयाऽधिकं शोभते।

इत्थं दाक्षिणात्यवेषा साहित्यविद्यावधू दृष्ट्वा काव्यपुरुषः पूर्वापेक्षयाऽधिकमावर्जितस्वान्तः सन् तस्यामनुरक्तो बभूवेति वर्णयन्नाह—**तामनुरक्तमना इति**। साहित्यविद्यावध्वा तत्र यद्विचित्रगीतनृत्यवाद्यादिकं चक्रे सैव कैशिकी वृत्तिरिति प्रथिता बभूवेत्याह—**सा कैशिकीवृत्तिस्तामित्यादि**। वैदर्भीरीतिं निरूपयन्नाह—**यदत्यर्थमित्यादि**। तया=साहित्यविद्यावध्वा अत्यन्तं वशीकृतः सन् काव्यपुरुषः स्वय योग्यस्थानकृतानुप्रासं समासरहित योगार्थसहितं शक्तिलक्षणादिवृत्तियुक्तं च यज्जगाद सैव वैदर्भीरीतिरिति प्रथिता बभूवेत्यर्थः। वृत्तिप्रवृत्तिरीतीनां मिथो भेदमाह—**तत्रेति**। तत्र=वृत्तिप्रवृत्तिरीतिषु। वेषविन्यासस्य नेपथ्यसाधनस्य यः क्रमः स प्रवृत्तिरित्युच्यते। विलासानाम्=आङ्गिकभावाभिनयानां विन्यासस्य यः क्रमः स वृत्तिरित्युच्यते। वचनानां=वाग्व्यापाराणा विन्यासस्य यः क्रमः स रीतिरित्युच्यते। आचार्याणामाशङ्कामाह—**चतुष्टयीति**। वृत्तय प्रवृत्तयश्च चतस्र एव पूर्वोक्तस्वरूपाः। देशाः पुनरनन्ताः, तत्सर्वेषु देशेषु चतुःसङ्ख्याकानामेव वृत्तिप्रवृत्तीना कथं समन्वय इत्याशङ्का। समाधत्ते—**अनन्तानपीति**। चतुर्षु विभागेषु अनन्तानपि देशान् विभज्य वृत्तिप्र-

कल्पयति "चक्रवर्तिक्षेत्रं सामान्येन, तदवान्तरविशेषाः पुनरनन्ता एव" इति यायावरीयः । दक्षिणात्समुद्रादुदीचीं दिशं प्रति योजनसहस्रं चक्रवर्तिक्षेत्रं, तत्रैष नेपथ्यविधिः । ततः परं दिव्याद्या अपि यं देशमधिवसेयुस्तद्देश्यं वेषमाश्रयन्तो निबन्धनीयाः । स्वभूमौ तु कामचारः । द्वीपान्तरभवानां तदनुसारेण वृत्तिप्रवृत्ती । रीतयस्तु तिस्रस्तास्तु पुरस्तात् । तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम् । तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत्परिणिनाय । ततस्तद्वधूवरं विनिवृत्त्य तेषु प्रदेशेषु विहरमाणं तुषारगिरिमेवाजगाम, यत्र गौरी सरस्वती च मिथः सम्बन्धिन्यौ तस्थतुः । तौ च कृतवन्दनौ दम्पती दत्त्वाशिषं प्रभावमयेन वपुषा कविमानसनिवासिनौ चक्रतुः । तयोश्च कविलोकस्वर्गसर्गं तमकल्पतां, यत्र काव्यमयेन शरीरेण मर्त्यमधिवसन्तो दिव्येन देहेन कवय आकल्पं मोदन्ते ।

इत्येष काव्यपुरुषः पुरा सृष्टः स्वयम्भुवा ।<br>एवं विभज्य जानानः प्रेत्य चेह च नन्दति ॥

॥ इति राजशेखरकृतौ काव्यमीमांसाया कविरहस्ये प्रथमेऽधिकरणे तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः ॥

---

वृत्तिचतुष्टय तत्र योजनीयमित्युत्तरम् । इदमेव कथयन्नाह—**अनन्तानपीति** । यायावरीयमतमाह—**चक्रवर्त्तिक्षेत्रमिति** । सामान्येन=साधारणभावेन सर्वदेशसमष्ट्यात्मकमिद चक्रवर्त्तिक्षेत्रमस्ति । अवान्तरविशेषाणां पृथक्कल्पने अनन्ताः प्रभेदा भवेयुरित्यर्थः । चक्रवर्त्तिक्षेत्र लक्षयति—**दक्षिणादिति** । स्पष्टम् । **प्रभावमयेन वपुषेति** । काल्पनिकशरीरेणेत्यर्थः । अध्यायमुपसंहरति—**इत्येष इति** । पूर्वोक्तकथानायकः काव्य पुरुषः स्वयंभुवा ब्रह्मणा सृष्टो निर्मितः । इदमित्थ कथासन्दर्भं जानन् पुरुषः इह लोकान्तरे च सुख प्राप्नोति ॥

इति श्रीमत् खिस्तेकुलालङ्करण भैरवनायकतनूजनि खिस्ते-इत्युपाख्य नारायणशास्त्रिप्रणीताया काव्यमीमासाचन्द्रिकाया तृतीयोऽध्यायः ॥ ३ ॥



## चतुर्थोऽध्यायः पदवाक्यविवेकः।

द्विविधं शिष्यमाचक्षते यदुत बुद्धिमानाहार्यबुद्धिश्च। यस्य निसर्गतः शास्त्रमनुधावति बुद्धिः स बुद्धिमान्। यस्य च शास्त्राभ्यासः संस्कुरुते बुद्धिमसावाहार्यबुद्धिः। त्रिधा च सा, स्मृतिर्मतिः प्रज्ञेति। अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः। वर्त्तमानस्य मन्त्री मतिः। अनागतस्य प्रज्ञात्री प्रज्ञेति। सा त्रिप्रकाराऽपि कवीनामुपकर्त्री। तयोर्बुद्धि-

---

अत्राध्याये शिष्यभेदं प्रदर्श्य तत्प्रयोजकबुद्धिभेदप्रदर्शनम्, कवित्वभावकत्वविचारः, तत्प्रभेदप्रपञ्चनम्, प्रतिभायाः कारयित्री भावयित्रीति भेदद्वयप्रदर्शनं च करिष्यते। अथ शिष्यभेदं प्रदर्शयति—**द्विविधमिति**। १ बुद्धिमान्, २ आहार्यबुद्धिः इति भेदद्वयेन शिष्यो द्विविधोऽस्ति। प्रथमस्तु नैसर्गिकबुद्धिमानिति विवृण्वन्नाह—**यस्येति**। यस्य बुद्धिमतः शिष्यस्य बुद्धिः निसर्गतः=स्वभावतः प्रयत्नं विना शास्त्रमनुधावति शास्त्रार्थावगाहिनी तत्प्रणयिनी च भवति स बुद्धिमानित्यर्थः। अपरस्तु यत्नोत्पाद्यबुद्धिरिति विवृण्वन्नाह—**यस्य चेति**। शास्त्राभ्यासः=पौनःपुन्येनानेकेषां शास्त्राणां सम्यक् परिशीलनम्। संस्कारमहिमा यस्य धारणात्मिकां विवेचनात्मिकां वा बुद्धिमुत्पादयति स आहार्यबुद्धिरित्यर्थः। **कौटिलीयेऽर्थशास्त्रे** तु "बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः। शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्, उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः। अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः"। इति त्रयो भेदा उक्ता लक्षिताश्च। बुद्धिं विभजते—**त्रिधा च सेति**। सा=बुद्धिः त्रिधा=त्रिप्रकारा। १ स्मृतिः २ मतिः, ३ प्रज्ञा इति त्रयः प्रकारास्तस्या इत्यर्थः। स्मृतिमाह—**अतिक्रान्तस्येति**। अतिक्रान्तस्यातीतस्य अर्थस्य=विषयस्य स्मर्त्री=संस्कारदार्ढ्यमहिम्ना स्मरणात्मकज्ञानरूपिणी। मतिमाह—**वर्त्तमानस्येति**। वर्त्तमानस्य=प्रस्तुतस्य अर्थस्य मन्त्री=मननात्मकज्ञानरूपिणी। प्रज्ञामाह—**अनागतस्येति**। अनागतस्य=भविष्यतोऽर्थस्य प्रज्ञात्री कल्पनात्मकज्ञानरूपिणी चेत्यर्थः। त्रिविधाप्येषा काव्यकर्मणि कवीनामपेक्षितैवेत्याह—**सा त्रिप्रकाराऽपीति**। पूर्वोक्तगुणयोः शिष्य-

मान् शुश्रूषते शृणोति गृह्णीते धारयति विजानात्यूहतेऽपोहति तत्त्वं चाभिनिविशते । आहार्यबुद्धेरप्येत एव गुणाः किन्तु प्रशास्तारमपेक्षन्ते । अहरहः सुगुरूपासना तयोः प्रकृष्टो गुणः सा हि बुद्धिविकाशकामधेनुः । तदाहुः—

प्रथयति पुरः प्रज्ञाज्योतिर्यथार्थपरिग्रहे

---

योर्गुणतारतम्य पुनरप्याह—तयोरिति । बुद्धिमदाहार्यबुद्ध्योः शिष्ययोर्मध्ये इत्यर्थः । तत्र बुद्धिमान् शिष्यस्तु शुश्रूषते=गुरोः सकाशात्स्वाभाविकप्ररणयैव शास्त्राणि श्रोतुमिच्छति । शृणोति=गुरूक्तं सावधानमनाः सन् आकर्णयति । गृह्णीते=गुरूपदेश श्रुत्वा तं यथावदवगच्छति । धारयति=श्रुतस्य ज्ञातस्य चार्थस्य संस्कारात्मना चित्त सर्वदा धारणं करोति । विजानाति=श्रुतस्य ज्ञातस्य धारितस्य चार्थस्य पुनः पुनः पर्यालोचनाद्विशेषज्ञानवान् भवति । ऊहते=विशेषज्ञानमहिम्नैव तत्र विविधान् विकल्पान् वितर्कयति । अपोहति=तांश्च विकल्पान् कांश्चिदनुपयुक्तान् तदंशान् वा परित्यजति । तत्त्वं चाऽभिनिविशते=इत्थं कञ्चिदर्थं श्रुत्वा, ज्ञात्वा, धारयित्वा, पुनः पुनः पर्यालोच्य, बहुविधं वितर्क्य, दुष्टांश्च च परित्यज्य वस्तुयाथार्थ्यमवगम्य तात्रऽभिनिविष्टो भवतीत्यर्थः। बुद्धिमतः शिष्यस्यैते गुणाः स्वाभाविकाः सन्ति । अथाहार्यबुद्धिगुणमाह—आहार्यबुद्धेरिति । पूर्वोक्ता एव गुणा आहार्यबुद्धेरपि भवन्ति, किन्तु ते न स्वाभाविकाः, अपि तु—प्रशास्तारमपेक्षन्ते=प्रशास्तुर्गुरोर्बलसापेक्षा इत्यर्थः । द्विविधयोरपि शिष्ययोः सुगुरूपासना कर्त्तव्यैवेत्याह—अहरह इति । अहरहः=प्रतिदिनम् । प्रकृष्टो गुणः=गुणप्रकर्षप्रादिकेति भावः । सद्गुरूपासनाया गुणप्रकर्षजनकत्वेऽपि गुणप्रकर्षात्मकत्वकथन कार्यकारणयोरभेदेनोपचरितम् । सद्गुरूपासनाया गुणप्रकर्षजननेऽव्यभिचारिताऽस्ति, इति भावः । सुगुरूपासनामाहात्म्यमाह—सा हीति । सा=सुगुरूपासना । बुद्धिविकासकामधेनुः बुद्धेर्विकासाय=विविधविकल्पोद्भासनात्मकबुद्धिविस्फारय कामधेनुः=कामगवीस्वरूपा । सद्गुरूपासनया यथेच्छ बुद्धिविकासो भवतीत्यर्थः । तदेवाह—प्रथयतीति । विद्यावृद्धै=र्वयसा नवीनैरपि ज्ञान-

तदनु जनयत्यूहापोहक्रियाविशदं मनः ।
अभिनिविशते तस्मात्तत्त्वं तदेकमुखोदयं
सह परिचयो विद्यावृद्धैः क्रमादमृतायते ॥

ताभ्यामन्यथाबुद्धिर्दुर्बुद्धिः । तत्र बुद्धिमतः प्रतिपत्तिः । स खलु सकृदभिधानप्रतिपन्नार्थः कविमार्गं मृगयितुं गुरुकुलमुपासीत । आहार्यबुद्धेस्तु द्वयमप्रतिपत्तिः सन्देहश्च । स खल्वप्रतिपन्नमर्थं प्रतिपत्तुं

---

वृद्धैरित्यर्थः । तैः सह **परिचयः**=सहवासपूर्वको वा व्यवहार इत्यर्थः । पुरः=पूर्वम् । प्रज्ञारूपं बुद्ध्यात्मकं ज्योतिः=तेजः । प्रथयति=प्रकाशयतीत्यर्थः । तदनु=ततः परम् । यथार्थपरिग्रहे=वस्तुतत्त्वज्ञानाय । मनः=चित्तम् । ऊहश्चापोहश्च तयोःक्रियायां व्यापारे विशदम् । विकल्पकुशलं त्याज्यांशपरिहारकुशलं चेत्यर्थः । जनयति=सम्पादयति । तस्मात्=तदनन्तरमित्यर्थः ।तदेकमुखोदयम्=सएव एकमुखः=प्रमुखः उदयउत्पत्तिर्यस्य तत् । तदेकप्रधानमित्यर्थः । तत्त्वम्=वस्तुयाथार्थ्यम् । अभिनिविशते=अवगाहते प्राप्नोतीत्यर्थः । एवं क्रमेण विद्यावृद्धैः सह परिचयः क्रमात् अमृतायते=अमृतवदुपकारको भवतीत्यर्थः । तृतीय शिष्यभेदमाह—**ताभ्यामिति** । ताभ्या=बुद्धिमदाहार्यबुद्धिभ्याम् । अन्यथावृत्तिः=विपरीतव्यापारः । वैपरीत्यं च निसर्गतः प्रयत्नेनाऽपि शास्त्रपराङ्मुखत्वम् । एतादृशः शिष्यो दुर्बुद्धिरित्याख्यात स्तृतीयः प्रकारः । अथ शिष्यभेदानुक्त्वा तेषां प्रत्येकं कर्तव्यमाह—**तत्रेति** । तेषु विविधेषु शिष्येष्वित्यर्थः । बुद्धिमतः=प्रथमप्रकारस्य प्रतिपत्तिर्विनियोगः कर्तव्यमिति यावत् । तदेवाह—**स खल्विति** । सः=बुद्धिमान् शिष्यः । सकृत्=एकवारमेव, अभिधानेन=उपदेशेन प्रतिपन्नः=ज्ञातःअर्थो=वस्तुतत्त्वं येन सः । कविमार्गं=कवीनां मार्गं पन्थानं सम्प्रदायक्रममित्यर्थः । मृगयितुं=अन्वेष्टुं प्राप्तुमित्यर्थः । गुरुकुलम्=गुरूणां साहित्यविद्याधूर्धराणा महाकवीनाम् कुल=सुहृं सम्प्रदायविशेषं वा उपासीत=शुश्रूषासेवादिना निरन्तरमुपगच्छेत् । द्वितीयप्रकारस्य शिष्यस्य स्वरूपं कर्तव्यं चाह—**आहार्यबुद्धेस्त्विति** । आहार्यबुद्धेः शिष्यस्य अप्रतिपत्तिः=अज्ञानं, सन्देहोऽनिश्चयश्चेतिद्वयं भवति । सः=आहार्यबुद्धिः, अप्रतिपन्नं=अज्ञातमर्थं विषयं प्रतिपत्तुं=ज्ञातुं

सन्देहं च निराकर्तुमाचार्यानुपातिष्ठते। दुर्बुद्धेस्तु सर्वत्र मतिविपर्यास एव। स हि नीलीमेचकितसिचयकल्पोऽनाधेयगुणान्तरत्वात्तं यदि सारस्वतोऽनुभावः प्रसादयति तमौपनिषदिके वक्ष्यामः। "काव्यकर्मणि कवेः समाधिः परं व्याप्रियते" इति श्यामदेवः। मनस एकाग्रता समाधिः। समाहितं चित्तमर्थान्पश्यति। उक्तञ्च—

---

सन्देहं मनिश्चयात्मकं च निराकर्तुं=गुरुवचनाविश्वासबलाद् दूरीकर्तुं आचार्यान्=शास्त्राध्यापकान् पाठशालीयान् पण्डितान्, न तु महाकवीन्, तत्र गमने आहार्यबुद्धेरनधिकृतत्वात्। उपतिष्ठेत=नित्यं नियमपालनपुरःसरं यथासमयं पाठशालागमनादिना सेवेत। तृतीयस्य स्वरूपं कर्तव्यं चाह—**दुर्बुद्धेस्त्विति**। तृतीयप्रकारस्य दुर्बुद्धेः शिष्यस्य सर्वत्र=सर्वेषु लौकिकेषु शास्त्रीयेषु वा विषयेषु, मतिविपर्यास एव=मतेर्बुद्धेर्विपर्यासो विपरीतमार्गगमनमेव भवति। दुर्बुद्धिः स्वबुद्धेर्दौरात्म्यमहिम्ना सन्तमप्यर्थमसन्तमवगच्छतीत्यर्थः। प्रयत्नः किमिति न क्रियत इत्याह—**स हीति**। सः=दुर्बुद्धिः शिष्यो हि प्रयत्नेनापि गुणाधानपात्रं न भवति। यतः स नीलीमेचकितसिचयकल्पः=नील्या=अमङ्कुरेण नीलीवर्णेन, मेचकितं नीलीकृतं यत् सिचयं वस्त्रं तत्कल्पस्तत्सदृशः। अतएवाह—**अनाधेयगुणान्तरत्वादिति**। अन्यो गुणो गुणान्तरम्, अनाधेयं आधातुमशक्यं गुणान्तरं यस्मिन्, तस्य भावस्तत्त्वात्। नीलीमेचकिते सिचये यथाऽन्ये रक्तपीतादयो गुणा आधातुं न शक्यन्ते एवमेव दुर्बुद्धौ शिष्ये उपाध्यायप्रयत्नेनापि शास्त्रप्रवणतादयो गुणा आधातुं न शक्यन्ते। तस्याप्युपायमाह—**तं यदीति**। तं=दुर्बुद्धिं सारस्वतोऽनुभावः=सरस्वतीमन्त्राराधनादिजन्यमदृष्टम्, सारस्वतमन्त्रसिद्धमहापुरुषकृताशिरःस्पर्शप्रभावो वा यदि प्रसादयति=प्रसादपात्रीकरोति तत्प्रकारं औपनिषदकेऽधिकरणे वक्ष्यामः। अथ काव्यनिर्माणे मुख्यं साधनं विचारयन् प्रथमतः **श्यामदेव** मतमाह—**काव्यकर्मणीति**। काव्यकर्मणि=काव्यनिर्माणे, कवेः=काव्यनिर्मातुः, समाधिः परं=मुख्यतया, व्याप्रियते=साधनीभवति। समाधिपदार्थमाह—**मनसइति**। मनसश्चित्तस्य एकाग्रता=विचारणीयैकविषयालम्बनत्वमेव समाधिरित्यर्थः। एवं कृते किं भवतीत्याह—**समाहित-**

सारस्वतं किमपि तत्सुमहारहस्यं यद्गोचरे च विदुषां निपुणैकसेव्यम् ।
तत्सिद्धये परमयं परमोऽभ्युपायो यच्चेतसो विदितवेद्यविधेः समाधिः॥

"अभ्यासः" इति मङ्गलः । अविच्छेदेन शीलनमभ्यासः । स हि सर्वगामी सर्वत्र निरतिशयं कौशलमाधत्ते। समाधिरान्तरः प्रयत्नो बाह्यस्त्वभ्यासः । तावुभावपि शक्तिमुद्भासयतः । "सा केवलं काव्ये

---

मिति । समाहितं=एकाग्रताभ्यासमहिम्ना विषयान्तःप्रवेशपूर्वकं तदीययाथार्थ्यानुसन्धानचतुरं, चित्तमर्थान्=ज्ञातव्यविषयान् पश्यति=याथार्थ्येनावगच्छति। तथाचोक्तमभियुक्तैः—"चित्तैकाग्र्यमवधानम्, अवहितं हि चित्तमर्थान् पश्यति" इति । समाधेः काव्यकर्मणि मुख्यसाधनत्वमाभियुक्तोक्त्या समर्थयति—**उक्तं चेति । सारस्वतमिति** । तत्=अनिर्वचनीयम्, सारस्वतं=सरस्वतीसम्बन्धि, किमपि=लक्षयितुमशक्यं, सुमहारस्यं=परैरविदिततमं गोपनीयं तत्त्वमस्ति । यत् तत्त्व विदुषां=पण्डितानां विषये निपुणैकसेव्य=निपुणतया अवश्यं सेव्यमस्ति । अर्थात् पण्डितैस्तदवश्यमेव निपुणं सेव्यम् । तत्सिद्धये=तादृशमहारहस्यप्राप्तये, अयं परमः=श्रेष्ठः अभ्युपायः=उपायोऽस्ति. यत् विदितवेद्यविधेः=विदितो=ज्ञातः वेद्यानां=पदार्थानां विधिः प्रकारो येन तादृशस्य चेतसः समाधिः=एकाग्रतैव चित्तैकाग्र्यमेव काव्यस्फूर्तेर्मुख्य साधनमित्यर्थः। मङ्गलस्य मतमाह—**अभ्यास इति**। अभ्यासमाह—**अविच्छेदेनेति** । अविच्छेदेन=सातत्येन नैरन्तर्येणेत्यर्थः। शीलन=ग्रन्थानुशीलनम् । अभ्यासस्य माहात्म्यमाह—**स हीति** । सः=अभ्यासो हि सर्वगामी=सर्वेषु विषयेषु सम्भवतीत्यर्थः । सर्वत्र सर्वेषु अभ्यस्तेषु विषयेषु । निरतिशय=अभ्यासातिशयमहिम्ना प्रकृष्टतमम्। कौशलं=चातुर्यम् । आधत्ते=उत्पादयतीत्यर्थः । समाध्यभ्यासयोर्भेदमाह—**समाधिरिति** । अन्तरिन्द्रियस्य मनस एकाग्रतापादनात्मकत्वात्समाधिरान्तरः, प्रयत्नः । ग्रन्थस्यावर्तनपरिशीलनादौ मुखनेत्रादिबाह्यप्रयत्नसापेक्षत्वादभ्यासो बाह्यः प्रयत्न इत्यर्थः । उभयोरपि सार्थक्यमाह—**तावुभावपीति** । तावुभौ=समाध्यभ्यासौ । शक्तिं=काव्यस्फूर्तिजनिकाम् । उद्भासयतः=जनयत इत्यर्थः । समाधिना=अभ्यासेन च काव्यशक्तिरुत्पद्यते इत्यर्थः । स्वम-

हेतुः" इति यायावरीयः । विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम् । शक्तिकर्तृके हि प्रतिभाव्युत्पत्तिकर्मणी । शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते । या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव । यतो मेधाविरुद्रकुमार-

---

तेन शक्तेः कार्यमाह—**सा केवलमिति** । सा=काव्योद्भासिनी शक्तिः । केवलम्=इतरानपेक्षतया, प्राधान्येनेत्यर्थः । काव्ये=काव्यनिर्माणे । हेतुः= कारणम् । प्रतिभाव्युत्पत्तिभ्यां तस्या भेदमाह-**विप्रसृतिश्चेति** । सा= शक्तिः, प्रतिभाव्युत्पत्तिभ्यां विप्रसृतिः=दूरवर्तिनीत्यर्थः । तत्र हेतुमाह- **शक्तिकर्तृके इति** । प्रतिभा च व्युत्पत्तिश्च तयोः कर्मणी कार्ये शक्तिकर्तृके=शक्तिजन्ये इत्यर्थः । यदि शक्तिर्न स्यात्तर्हि प्रतिभाव्युत्पत्त्योः कार्ये अपि न संभवतः । प्रतिभाव्युत्पत्तिकर्मणोः शक्त्येकाधिष्ठानत्वादिति भावः । तदेवाह- **शक्तस्येति** । शक्तस्य=काव्यकारणीभूतशक्तियुक्तस्य पुरुषस्य, प्रतिभाति= प्रतिभात्मकबुद्ध्या नवनवार्थप्रतिभानं भवति । एवं शक्तः पुरुष एव व्युत्पद्यते= व्युत्पत्तिमान् भवति । प्रतिभाव्युत्पत्त्योर्भेदस्त्वनुपदमेव दर्शयिष्यते। प्रतिभामाह- **येति** । या=प्रतिभात्मिका विशिष्टबुद्धिः शब्दग्रामं=काव्यानुकूलशब्दसमुदायम्, अर्थसार्थं=सहृदयहृदयङ्गम शब्दार्थराशिं च, अलङ्कारतन्त्रं=शब्दार्थोभयालङ्कारप्रपञ्चम्, उक्तिमार्गं=कविसमयानुकूलमुक्तिचमत्कारम्, अन्यदपि तथाविधमधिहृदयं=हृदयाभ्यन्तरे, प्रतिभासयति=झटिति समुल्लासयति=सा प्रतिभा नामेत्यर्थः । प्रतिभायाः फलमन्वयव्यतिरेकाभ्यामाह-**अप्रतिभस्येति** । प्रतिभाख्यबुद्धिविशेषरहितस्य पुरुषस्य पदार्थसार्थः=शब्दार्थौघः परोक्ष इव=इन्द्रियागोचर इव ज्ञानविषयो न भवति । अपश्यतोऽपि= इन्द्रियार्थसन्निकर्षविधया बहिरिन्द्रियव्यापारमकुर्वतोऽपि प्रतिभावतः पुरुषस्य सर्वोऽपि=पदार्थसार्थः प्रत्यक्ष इव=इन्द्रियगोचर इव झटिति ज्ञानविषयो भवति । इत्थं चान्वयव्यतिरेकाभ्यां पदार्थसार्थज्ञाने प्रतिभैव कारणमिति सिद्धम् । अन्वयोदाहरणमाह-**यत इति** । यतः=प्रतिभायाः पदार्थसार्थकारणत्वादेव मेधाविरुद्रः, कुमारदासः, आदिपदान्मूकमहाकविप्रभृत-

दासादयो जात्यन्धाः कवयः श्रूयन्ते । किञ्च महाकवयोऽपि देशद्वीपान्तरकथापुरुषादिदर्शनेन तत्रत्यां व्यवहृतिं निबध्नन्ति स्म ।

तत्र देशान्तरव्यवहारः—

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ 3

---

यश्च जात्यन्धाः=जन्मान्धाः श्रूयन्ते । इत्थमपि तैः सकलानां जागतपदार्थानां वर्णनं कृतमस्ति । तत्र प्रतिभैव हेतुः । मेधाविरुद्र इति कवेर्नाम । नमिसाधुकृतायां रुद्रटालङ्कारटीकायां "ननु दण्डिमेधाविरुद्रभामहादिकृतानि सन्त्येवालङ्कारशास्त्राणि" इत्युक्तेर्मेधाविरुद्रोऽलङ्कारशास्त्रप्रणेताऽऽसीदित्यपि ज्ञायते । श्रूयते च जन्मान्धानामपि महाकवीनां भारतमार्तण्डगट्टूलालमहोदयानां शीघ्रकवित्वमद्भुतं वर्णनकौशलञ्च । अन्यदप्याह—**किञ्चेति** । महाकवयः स्वदेशस्थिता अपि प्रतिभामहिम्ना देशान्तरद्वीपान्तरस्थ कथापुरुषान् प्रत्यक्ष पश्यन्त इव तेषां व्यवहारं वर्णयन्ति । तत्राऽपि प्रतिभैव हेतुः । तत्र देशान्तर व्यवहारनिबन्धनमुदाहरति—**प्राणानामिति** । अभिज्ञानशाकुन्तले सप्तमाङ्के पद्यमिदम्—स्वर्गलोके निवसतां मुनीनामाश्रमवर्णनमिदम् । अनिलेन वायुना प्राणानां वृत्तिधारणम् । वायुभक्षणमात्रेण प्राणधारणमत्र क्रियतइत्यर्थः । कुत्रेत्याह—**सत्कल्पवृक्षे वने इति** । यत्र वने काङ्क्षितार्थप्रदातारः कल्पवृक्षाः प्राचुर्येण सन्ति तत्र वने मुनयो वायुभक्षणमात्रेण प्राणधारणं कुर्वन्तीत्यर्थः । काञ्चनपद्मानां सुवर्णकमलानां रेणुभिः पांसुभिः कपिशे पीताभे तोये दीर्घिकाजले पुण्याभिषेकस्य त्रैकालिकनियमस्नानस्य क्रिया व्यापारो भवति । रत्नशिलाभिर्गारुत्मतादिरत्नैर्निर्मितेषु भवनेषु ध्यानं समाधिकार्यं क्रियते । विबुधस्त्रीणां देवाङ्गनानां सन्निधौ सामीप्ये सत्यपि संयमः इन्द्रियाणामविचलितत्वं भवति । अन्ये मुनयस्तु यस्या द्वारा यानि फलानि काङ्क्षन्ति तेषु स्वयमुपस्थितेष्वपि एते स्वर्गीया मुनयस्तपस्यन्ति निःस्पृहा भवन्तीत्यर्थः । एवं स्वर्गलोकव्यवहारो मर्त्यलोकनिवासिनाऽपि कालिदासेन स्वप्रतिभाबलात्प्रति-

द्वीपान्तरव्यवहारः—

अनेन सार्द्धं विहराम्बुराशेस्तीरेषु ताडीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥

कथापुरुषव्यवहारः—

हरोऽपि तावत्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्वफलाधरौष्ठे व्यापारयामास विलोचनानि ॥

आदिग्रहणात्—

तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदावभाषे ।
बाले व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥

---

बद्धः । द्वीपान्तरव्यवहारनिवन्धनमुदाहरति—**अनेनेति** । रघुवंशे इन्दुमतीस्वयंवरे पद्यमिदम् । अनेन पुरःस्थितेन राज्ञा सह तालीवनैर्मर्मरेषु मर्मरशब्दवत्सु अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरात् अन्यस्मात्समीपवर्त्तिनो द्वीपात् आनीतानि समाहृतानि लवङ्गपुष्पाणि यैस्तैः । अत्र लवङ्गपुष्पानयन तदीयसौरभानयनोपलक्षकम् । एवमूतैर्मरुद्भिर्वायुभिः अपाकृतो निवारितः स्वेदलवो घर्मकणिका यस्यास्तादृशी सती विहरेति सुनन्दाया इन्दुमतीं प्रत्युक्तिः । अत्र द्वीपान्तरभवाना लवङ्गपुष्पाणा संयोगेन पवनस्य सौरभवर्णन कविना प्रतिभावलादेवोपनिबद्धम् । कथापुरुषव्यवहारमुदाहरति—**हरोऽपीति** । कुमारसम्भवे वसन्तोदये पार्वतीसन्निधाने हरस्य चित्तविकारवर्णनपरं पद्यमिदम् । चन्द्रोदयारम्भे अम्बुराशिः समुद्रइव पार्वतीसन्निधानवशात् परिवृत्तधैर्यः किञ्चिच्छिथिलीभूतधैर्यः हरोपि विम्बफलोपमाधरौष्ठशालिनि उमाया मुखे चुम्बनेच्छया त्रीण्यपि नेत्राणि व्यापारयामास । अत्र प्रसिद्धस्य कथापुरुषस्य शिवस्य रहसि हिमवच्छृङ्गे पार्वत्या सह व्यवहारः कविना स्वप्रतिभावलादेवोपनिबद्धः । आदिग्रहणात्परोक्षस्य यत्किञ्चिद्व्यवहारस्यापि प्रत्यक्षवन्निबन्धनम् । यथा—**तथागतायामिति** । इदमपि रघुवंशे इन्दुमतीस्वयंवरे पद्यम् । पुरोवर्त्तिनि राज्ञि सानुरागा ततोऽन्यत्र गन्तुमनिच्छुकामिन्दुमतीं दृष्ट्वा परिहासपूर्वं सुनन्दाया उक्तिः । सख्या इन्दुमत्या तथागताया पुरोवर्तिनि भूपे बद्धानुरागाया सत्या, वेत्रभृत् वेत्रधारिणी सखी सुनन्दा आवभाषे—हे बाले ! अन्यतो व्रजामः अथ वधूरिन्दुमती एना सुनन्दा असूयया-

सा च द्विधा कारयित्री भावयित्री च। कवेरुपकुर्वाणा कारयित्री। साऽपि त्रिविधा सहजाऽऽहार्यौपदेशिकी च। जन्मान्तरसंस्कारापेक्षिणी सहजा। जन्मसंस्कारयोनिराहार्या। मन्त्रतन्त्राद्युपदेशप्रभवा औपदेशिकी। ऐहिकेन कियतापि संस्कारेण प्रथमां तां सहजेति व्यपदिशन्ति। महता पुनराहार्या। औपदेशिक्याः पुनरैहिक एव उपदेशकालः, ऐहिक एव संस्कारकालः। त इमे त्रयोऽपि कवयः सारस्वत,

---

कुटिलं यथास्यात्तथा ददर्श। अत्र सुनन्देन्दुमत्योर्मिथो व्यवहारः परोक्षोऽपि कविना स्वप्रतिभाबलात्प्रत्यक्षवदुपनिबद्धः। एवं प्रतिभां निरूप्य विभजते— **साचेति**। सा=प्रतिभा। द्विधा=द्विप्रकारा। प्रकारद्वयमाह— **कारयित्री भावयित्री चेति**। तत्राद्यामाह—**कवेरिति**। कवेः काव्यकर्तुः उपकुर्वाणा उपकारिका सा कारयित्री नाम प्रतिभेत्यर्थः। तामपि विभजते—**साऽपीति**। सहजा, आहार्या, औपदेशिकीति भेदैः सा त्रिविधेत्यर्थः। तत्र सहजा लक्षयति—**जन्मान्तरेति**। पूर्वजन्मजातसंस्कारसापेक्षा या सैवेह जन्मनि सहजा=स्वाभाविकीत्युच्यते। आहार्यां लक्षयति— **जन्मसंस्कारेति**। जन्मनः=इहजन्मसम्बन्धी यः संस्कारस्तदपेक्षिणी आहार्येत्युच्यते। औपदेशिकीं लक्षयति—**मन्त्रतन्त्रादीति**। मन्त्रतन्त्रादेरुपदेशात् प्रभव उत्पत्तिर्यस्याः सा औपदेशिकीत्युच्यते। आदिपदात् सारस्वतमन्त्रसिद्धमहापुरुषकृतशिरःस्पर्शस्याऽपि सङ्ग्रहः। तेनाऽपि कवितोत्पत्तेः श्रुतत्वात्।

जन्मान्तरसंस्काराणामज्ञातत्वात् पूर्वोक्तानां प्रतिभाविशेषाणां ज्ञानमेव दुःशकमिति शङ्कायामाह—**ऐहिकेनेति**। ऐहिकेनाल्पेनैव संस्कारेण समुद्बुद्धा प्रतिभा सहजेति व्यपदिश्यत इत्यर्थः। महता सस्कारेणैहिकेन पुनराहार्या समुत्पद्यत इत्यनयोर्भेदः। औपदेशिक्यां विशेषमाह— **औपदेशिक्या इति**। औपदेशिक्यां संस्कारोपदेशाविहजन्मन्येव भवतः। तत्र जन्मान्तरीयं न किञ्चिदपेक्षितं भवतीति भावः। अथ पूर्वोक्तान् प्रतिभाप्रभेदान् तत्तत्कविषु सङ्गमयन्नाह—**तइमे इति**। सारस्वत आभ्यासिक औपदेशिक इति ते त्रयः कवयः। तान्प्रत्येकं पूर्वोक्तप्रतिभाभेदैः सङ्ग-

आभ्यासिक, औपदेशिकश्च । जन्मान्तरसंस्कारप्रवृत्तसरस्वतीको बुद्धिमान्सारस्वतः। इहजन्माभ्यासोद्भासितभारतीक आहार्यबुद्धिराभ्यासिकः। उपदेशितदर्शितवाग्विभवो दुर्बुद्धिरौपदेशिकः। तस्मान्नेतरौ तन्त्रशेषमनुतिष्ठताम् । "नहि प्रकृतिमधुरा द्राक्षा फाणितसंस्कारमपेक्षते" इत्याचार्याः। "न" इति यायावरीयः। एकार्थं हि क्रियाद्वयं द्वैगुण्याय सम्पद्यते। "तेषां पूर्वः पूर्वः श्रेयान्" इति श्यामदेवः। यतः—

---

मयति—**जन्मान्तरेति** । जन्मान्तरजन्यसंस्कारेणैव प्रवृत्ता समुद्बुद्धा सरस्वती कविताशक्तिर्यस्यासौ । अतएव लोके बुद्धिमानिति कथितो यः स सारस्वतः कविरित्यर्थः। आभ्यासिकमाह—**इहेति** । इहजन्मकृताभ्यासेन उद्भासिता प्रकटिता भारती कविताशक्तिर्यस्य तथाविध आहार्या उत्पाद्या बुद्धिर्यस्य स चासौ आभ्यासिक. कविरित्यर्थः। औपदेशिकमाह—**उपदेशितेति** । उपदेशितः=मन्त्रतन्त्राद्युपदेशेन जनितः, दर्शितः उदाहरणादिद्वारा प्रदर्शितः वाग्विभवः कविताशक्त्यात्मकं वाक्सामर्थ्यं यस्य सः । किञ्च स्वभावतः स दुर्बुद्धिर्दुर्मेधा औपदेशिकः कविरित्यर्थः । **तस्मादिति** । इतरौ=सारस्वताभ्यासिकौ यथाक्रमं बहल्पाभ्यासवन्तौ वाग्वैभवशालिनौ। तस्मात्=तृतीयादौपदेशिकात् दुर्बुद्धेरपेक्षया इतरौ तन्त्रशेषं=मन्त्रतन्त्राद्युपदेशात्मक नानुतिष्ठताम्=नापेक्षेते । अत्रार्थे प्राचीनाचार्यसम्मतिमाह-**नहीति**। स्वभावतो मधुराया द्राक्षाया माधुर्यवर्द्धनाय फाणितस्य इक्षुरसविकारात्मकस्य दोहदस्य संस्कारो नाऽपेक्ष्यते । फाणितलक्षण तु यथाऽऽहुरगदङ्काराः—स पूर्वेक्षुविकारेषु ख्यातः फाणितसञ्ज्ञया । इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः। इति। स्वमतमाह—**नेति यायावरीय इति** । तदेव समर्थयति—**एकार्थं हीति** । एकप्रयोजनसम्पादक क्रियाद्वय फल द्विगुणयतीत्यर्थः। तथाच सारस्वताभ्यासिकावपि यदि मन्त्रतन्त्राद्युपायमनुतिष्ठतां तर्हि तयोर्यथायोग मृदुबहुतराभ्याससम्भवात्कविताशक्तिर्ध्रुवं प्रगुणा भवेदिति यायावरीयस्य ग्रन्थकर्तु राजशेखरस्याशयः। अथैतेषां तारतम्यमितरसम्मत्या विचारयति—**तेषामिति** । तेषा पूर्वोक्तानां त्रिविधाना कवीना मध्ये औपदेशिकादाभ्यासिकस्तस्मात्सारस्वत इति पूर्वपूर्वः श्रेयान् इति

सारस्वतः स्वतन्त्रः स्याद्भवेदाभ्यासिको मितः ।
औपदेशकविस्त्वत्र वल्गु फल्गु च जल्पति ॥
"उत्कर्षः श्रेयान्" इति यायावरीयः । स चानेकगुणसन्निपाते भवति । किञ्च—
बुद्धिमत्त्वं च काव्याङ्गविद्यास्वभ्यासकर्म च ।
कवेश्चोपनिषच्छक्तिस्त्रयमेकत्र दुर्लभम् ॥
काव्यकाव्याङ्गविद्यासु कृताभ्यासस्य धीमतः ।
मन्त्रानुष्ठाननिष्ठस्य नेदिष्ठा कविराजता ॥

---

श्यामदेवस्य मतम् । इत्थंविधोत्कर्षतारतम्ये हेतुमुपन्यस्यति—**सारस्वत इति** । जन्मान्तरीयसंस्कारसहकृतैहिकसंस्कारपरिमार्जितबुद्धिः सारस्वतः कविर्निर्माणे स्वतन्त्रो भवति । सर्वत्राप्रतिहतसञ्चारा तस्य बुद्धिः कुत्राऽपि कुण्ठिता न भवति—इत्यत उक्तं सारस्वतः स्वतन्त्रः स्यादिति । द्वितीय आभ्यासिकस्त्विहजन्मकृताभ्यासोद्बुद्धवाग्वैभवतया परिमितमेव कवयितुं शक्नोति । इत्यत उक्तं भवेदाभ्यासिको मित इति । मन्त्रतन्त्राद्युपदेशप्रभावसमुद्बुद्धकवित्वशक्तिरौपदेशिककविस्तु कदाचिद्वल्गु सुन्दरं जल्पति, कदाचित्फल्गु निरर्थकं जल्पतीत्यनवस्थिता तस्य शक्तिरिति हेतोरेतेषु पूर्वपूर्व एव श्रेयानिति श्यामदेवोक्तिः समर्थिता भवति । स्वमतमाह—**उत्कर्षः श्रेयानिति** । उत्कर्ष एव श्रेयस्त्वप्रयोजकः, सारस्वताभ्यासिकौपदेशिकेषु यत्र स भवेत् स एव श्रेयानित्यर्थः । उत्कर्षहेतुमाह—**सचेति** । सचोत्कर्षः अनेकेषां गुणानां सन्निपाते भवति । यत्रानेके गुणाः स्युस्तत्रोत्कर्षो भवेदिति तात्पर्यम् । उत्कर्षप्रयोजकान् गुणानाह—**बुद्धिमत्त्वञ्चेत्यादिना** । काव्यस्याङ्गभूतासु विद्यासु बुद्धिमत्त्वं नैपुण्यपूर्वकं ज्ञातृत्वम्, अभ्यासकर्म=काव्यकरणाभ्यासः, कवेरिति जात्येकवचनम्, तथाच कवीनामुपनिषद्रहस्यज्ञानपूर्विका कवित्वशक्तिश्चेति त्रयमेकत्र पुरुषे दुर्लभम् । एते एवोत्कर्षप्रयोजका अनेके गुणाः । काव्ये, तदङ्गभूतासु छन्दःकोशादिविद्यासु कृताभ्यासस्य, अथ च सारस्वतमन्त्रानुष्ठानतत्परस्य, बुद्धिमतः सारस्वतकवेरभ्यासप्रकर्षमन्त्रानुष्ठानात्मकगुणसन्निपातानुभावात् कविराजता=महाकविपदप्राप्तिः नेदिष्ठा=करतलगतेव

कवीनां तारतम्यतश्चैष प्रायोवादः ।

एकस्य तिष्ठति कवेर्गृह एव काव्य-
मन्यस्य गच्छति सुहृद्भवनानि यावत् ।
न्यस्या(स्य?)विदग्धवदनेषु पदानि शश्व
त्कस्यापि सञ्चरति विश्वकुतूहलीव ॥

सेयं कारयित्री । भावकस्योपकुर्वाणा भावयित्री । सा हि कवेः

---

समीपे वर्तत इत्यर्थः । **कवीनामिति** । कवीनामुत्कर्षापकर्षतारतम्यादेष प्रवाद इत्यर्थः । प्रवादमाह—**एकस्येति** । एकस्यापकृष्टस्य दुर्बुद्धेरौपदेशिकस्य वा काव्यं गृहएव तिष्ठतिः, भित्तिचतुष्टयान्तराल एव वर्त्तते, न केनाप्याद्रियते । अन्यस्य मध्यमस्याभ्यासिकस्य वा काव्यं तदीयमित्रगृहपर्यन्तमेव गच्छति । मित्रमात्रानन्ददायि भवति । तत्र रमणीयत्वाभावान्न सर्वसाधारणस्यास्वाद्य भवतीत्यर्थः । अथ कस्याऽपि अनेकगुणसन्निपातप्रयोज्यप्रकर्षातिशयशालिनः कविराजस्य काव्यन्तु श्रुतिसुखाक्षरविन्यासवत्तया सरसतया च हलधरादिबुधावधि सकललोकसन्तोषकमिति अविदग्धानां प्राकृतानामपि बदनेषु श्रुतिसुखानि स्वपदानि न्यस्य विदग्धाविदग्धैः सादरङ्गीयमानं सत् विश्वस्य जगतोऽवलोकने सकौतुकमिव शश्वत्सर्वदा सञ्चरति, शब्दसौष्ठवमात्रेण प्राकृतान् , अर्थरसाद्यनुसन्धानेन सहृदयानानन्दयत् मुखान्मुखान्तरम्परिभ्रमतीत्यर्थः । तथा च यस्य कवेः काव्यमित्थंकारमशेषजनमनोमोदनं भवेत् सएव कविः श्रेयानिति भावः । ईदृशं च काव्यमनेकगुणशालिनो यस्य कस्याऽपि भवितुमर्हति । इत्थ प्रस्तुतं विषयं सोदाहरणं प्रतिपाद्य समुपसंहरन्नाह—**सेयमिति** । पूर्वोक्तेषु कविप्रभेदेषु प्रदर्शिता सेय प्रतिभा कारयित्रीति प्रसिद्धेत्यर्थः । अथाऽपरा भावयित्रीमाह—**भावकस्येति** । भावयति=काव्यार्थं सहृदयतयाऽऽस्वादयतीति भावकः काव्यार्थभावनापरिपक्वधीः सहृदयः, तस्योपकारिका या सा भावयित्री नाम प्रतिभेत्यर्थः । तस्याः प्रयोजनमाह—**साहीति** । सा=भावयित्री प्रतिभा कवेः काव्यनिर्मातुः श्रमं काव्यानुकुलशब्दार्थान्वेषणात्मकं प्रयासं, अभिप्रायं मनोगतं भावं च भावयति बोद्धुं प्रभवति । भावयित्र्याः प्रतिभाया एव बलादीदृशशब्दार्थभावा-

श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुरन्यथा सोऽवकेशी स्यात्। "कः पुनरनयोर्भेदो यत्कविर्भावयति भावकश्च कविः" इत्याचार्याः। तदाहुः—

प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा।
भावकस्तु कविः प्रायो न भजत्यधमां दशाम्॥

"न" इति कालिदासः। पृथगेव हि कवित्वाद्भावकत्वं, भावकत्वाच्च कवित्वं। स्वरूपभेदाद्विषयभेदाच्च। यदाहुः—

---

वगमः सहृदयस्य भवतीत्यर्थः। पूर्वोक्तार्थमेव विशदयन् पुनराह—**तयेति**। तया=भावयित्र्या प्रतिभया कवेः काव्यकरणात्मको व्यापारतरुः फलितः फलवान् भवति। अन्यथा=भावयित्र्याः प्रतिभाया अभावे सः कविव्यापारतरुः अवकेशी अफलः स्यात्। यदि भावकाः कवेः काव्यं भावयन्तो तत्रत्यरसमास्वाद्य नानन्दतुन्दिलाः स्युस्तर्हि कवेः काव्यकरणश्रमो व्यर्थ एव स्यात् इति भावः। इत्थं कारयित्रीं भावयित्रीं च प्रतिभां प्रतिपाद्य तत्तादृशप्रतिभाश्रययोः कारकभावकयोर्भेदं दर्शयन् आचार्याणा मतमाह—**कः पुनरिति**। अनयोः कारकभावकयोः कःपुनर्भेदः न कोऽपि भेदोऽस्तीत्यर्थः। यतः कविरेव भावयति, भावकोऽपि कवयति। इत्याचार्यमतसमर्थकमभियुक्तवचनमाह—**प्रतिभातारतम्येनेति**। भुवि प्रतिभायास्तारतम्येन उत्कर्षापकर्षविशेषेण प्रतिष्ठा सम्मान आस्पदं वा भूरिधा ऽनेकप्रकारा भवति। तत्र भावको भावनाशीलो यः कविः सोऽधमान्दशा कुकवियोग्यां दुर्दशा न भजति न प्राप्नोति। भावकत्वविशिष्टं कवित्वं प्रशस्यमित्यर्थः। पूर्वोक्तमतपरिपन्थि मतान्तरमाह—**नेति**। आचार्यमते भावकत्वकवित्वयोर्भेदो नास्तीति यदुक्तं तन्न युक्तम्। अपि तु तयोर्भेदोऽस्त्येवेति कालिदासःकथयतीत्यर्थः। तमेव भेदं विविशदयति—**पृथगेवहीति**। यः काव्यं कुरुते स कविः, यश्च काव्यार्थभावनापरिपक्वबुद्धिः सत्त्वोद्रेकान्निर्मलचेता वर्णनीयेन तन्मयीभावं भजति स भावक इति कविभावकयोः स्वरूपभेदः। किञ्च कवेः काव्यनिर्माणाय शब्दार्थालम्बनपूर्वकं वर्णनीया घटपटादयो विषयाः, भावकस्य तु रसमात्रास्वादयितुस्तदास्वादनमात्रं विषयः। इत्थं कविभावकयोर्विषयभेदात्स्वरूपभेदाच्च पृथगेव-

कश्चिद्वाचं रचयितुमलं श्रोतुमेवाऽपरस्तां
कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति ।
नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-
मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥

"ते च द्विधाऽरोचकिनः, सतृणाभ्यवहारिणश्च" इति मङ्गलः । "कवयोऽपि भवन्ति" इति वामनीयाः । "चतुर्द्धा" इति यायावरीयः । मत्सारिणस्तत्त्वाभिनिवेशिनश्च । "तत्र विवेकिनः पूर्वे तद्विपरीतास्तु

---

हि कवित्वाद्भावकत्व, भावकत्वाच्च कवित्वमिति कालिदासाशयः । पूर्वोक्तं कविभावकयोर्भेदमाभियुक्तोक्त्या प्रमाणयति—**कश्चिदिति** । कश्चित्=कारयित्र्यात्मकप्रतिभयैव युक्तः कविः वाचं रचयितुमलम्=काव्यं निर्मातुमेव प्रभवति । अपरो भावयित्र्यात्मकप्रतिभयैव युक्तः कविस्तां वाचं श्रोतुमेव भावयितुमेवाऽलम् । एव स्थितेऽपि महाकवेस्तव कल्याणी उभयथा मतिः कारयित्र्यात्मकभावयित्र्यात्मकप्रतिभाद्वयविशिष्टा बुद्धिः नः विस्मयं तनोति । विस्मयहेतुमाह—**नह्येकस्मिन्निति** । एकस्मिन् पुरुषे अतिशयवतां प्रकृष्टाना गुणानां सन्निपातः सङ्घातो न दृश्यते । कुत इति चेदाह—**एकइति** । एकः उपलः स्पर्शमाणीरित्यर्थः । कनकं सुवर्णं सूते उत्पादयति । अन्यः निकषोपलः तस्य कनकस्य परीक्षायां तारतम्यविचारे क्षमः समर्थो भवति । अत्र क्रमेण विशेषसामान्यविशेषनिवेशनाद्विकस्वरालङ्कारः । अथ भावकान् विभजते—**ते चेति** । ते च भावकाः द्विधा । तत्र केचित् अरोचकिनः, केचित्सतृणाभ्यवहारिणश्च भवन्ति इति मङ्गलस्याशयः । न रोचयतीत्यरोचकः सोऽस्यास्तीत्यरोचकी । अरोचको नाम रोग विशेषः, यस्मिन् सति सुस्वादयुक्तेऽप्यन्ने प्रीतिर्न भवति । तथैके कवयोऽप्यरोचकिनः, ये सरसेऽपि काव्ये नासाक्षिसङ्कोच कुर्वन्ति । तृणमप्यपरित्यज्येति सतृणम् । सतृणमभ्यवहरन्ति भुञ्जते इति सतृणाभ्यवहारिणः । यथा बुभुक्षिता पात्रे परिवेषितान्नव्यञ्जनादिकमशेषमदन्ति तथा तद्विधाः कवयश्छन्दोमुद्राङ्कितं यत्किञ्चिदपि काव्यात्मना रसयन्ति ते सतृणाभ्यवहारिणोऽविवेकिन इति यावत । कवयोऽपि अरोचकिनः सतृणाभ्यवहारिणश्च भवन्तीति वामनमतानुयायिना मतम् ।

ततोऽनन्तराः” इति वामनीयाः। “अरोचकिता हि तेषां नैसर्गिकी ज्ञानयोनिर्वा। नैसर्गिकी हि संस्कारशतेनाऽपि वङ्गमिव कालिकां ते न जहति। ज्ञानयोनौ तु तस्यां विशिष्टज्ञेयवति वचसि रोचकिता वृत्तिरेव” इति यायावरीयः। किञ्च सतृणाभ्यवहारिता सर्वसाधारणी। तथा-हि व्युत्पित्सोः कौतुकिनः सर्वस्य सर्वत्र प्रथमं सा। प्रतिभाविवेकवि-कलता हि न गुणागुणयोर्विभागसूत्रं पातयति। ततो बहु त्यजति बहु च गृह्णाति। विवेकानुसारेण हि बुद्धयो मधु निष्यन्दन्ते। परिणामे तु यथार्थदर्शी स्यात्। विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते। मत्स-रिणस्तु प्रतिभातमपि न प्रतिभातं, परगुणेषु वाचंयमत्वात्।

---

अथाऽत्र विषये स्वमतमाह—**अरोचकिता हीति**। तेषां भावकानामरो-चकिता हि नैसर्गिकी सहजा ज्ञानयोनिर्बुद्धिपूर्विका वा भवति। नैसर्गिकी चेत् संस्कारशतेनाऽपि दूरीकर्तुं न शक्यते। तादृशारोचकिना निसर्गसुन्दरं सरस-मपि काव्यं न मोदं जनयति। अत्र दृष्टान्तमाह—**वङ्गमिव कालिका-मिति**। वङ्गो धातुविशेषः शोधनभावनादिसंस्कारसहकृतोऽपि स्वा-भाविकीं कालिकां नीलिमानं यथा न त्यजति तथेत्यर्थः। सैवारोचकिता ज्ञानयोनिश्चेत् सविशेषरसध्वन्यात्मके वचसि तेषां रोचकिता वृतिरेव सादरो-व्यवहार एव भवतीत्यर्थः। इति यायावरीयस्य राजशेखरस्याशयः। **सतृ-णेति**। सतृणाभ्यवहारितात्मिका वृत्तिः सर्वजनसाधारणी, तदेव दर्शयति—**तथा हीति**। काव्यनिर्माणे प्रवृत्तस्य सर्वस्यैव व्युत्पित्सोः प्रथमं सतृणा-भ्यवहारिता वृत्तिर्भवत्येव। प्रतिभाया विवेकस्य च विकलता विरहो गुणदो-षयोर्विभाजकं सूत्रं न पातयति, गुणागुणाविवेकं कर्तुं न शक्नोतीत्यर्थः। **ततः**=प्रतिभाविवेकवैकल्याद्धेतोः। **विभ्रमेति**। विभ्रमस्य व्यामोहस्य विभ्रंशो राहित्यं निःश्रेयसं कल्याणं सन्निधत्ते समीपयतीत्यर्थः। **मत्सरिण इति**। मत्सरिणोऽन्यशुभद्वेषिणोऽसूयालोः पुरुषस्य तु प्रतिभातमपि बुद्ध्या-रूढमपि न प्रतिभातमिव। तत्र हेतुमाह—**परगुणेष्विति**। परगुणश्ला-घाप्रसङ्गे मौनस्वीकारस्य तत्स्वभावत्वादित्यर्थः। खलाः खलु परेषां सरसं काव्यमवलोक्य तत्रत्यं रसमास्वादयन्तोऽपि कवेः प्रतिष्ठा मा भूदिति हेतोः

स पुनरमत्सरी ज्ञाता च विरलः । तदुक्तम्—

कस्त्वं भोः कविरस्मि काप्यभिनवा सूक्तिः सखे पठ्यतां
त्यक्ता काव्यकथैव सम्प्रति मया कस्मादिदं श्रूयताम् ।
यः सम्यग्विविनक्ति दोषगुणयोः सारं स्वयं सत्कविः
सोऽस्मिन्भावक एव नास्त्यथ भवेद्दैवान्न निर्मत्सरः ॥

तत्त्वाभिनिवेशी तु मध्येसहस्रं यद्येकस्तदुक्तम्—

शब्दानां विविनक्ति गुम्फनाविधीनामोदते सूक्तिभिः
सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः ।
पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यतां
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ॥

---

सनासाक्षिभ्रूसङ्कोचं तत्काव्यं परित्यज्य तत्र मौनं भजन्त इति बहुशो दृष्टं दृश्यते चाहरहः । सइति । स. भावकः पुनर्विरलो यो ऽमत्सरी च ज्ञाता च भवेदित्यर्थः । उक्तार्थे प्राचीनपद्यं प्रदर्शयति—तदुक्तं—कस्त्वमिति । कस्याऽपि कंचित् प्रश्नस्तदुत्तरं च । भोः ! कस्त्वम् ! इति प्रश्नः । कविरस्मि—इत्युत्तरम् । हेसखे ! यदि त्वं कविरसि तर्हि काऽपि अभिनवा नवीना सूक्तिः पठ्यताम्, इति पुनः प्रश्नः, मया सम्प्रति काव्यकथैव त्यक्ता—इति पुनरुत्तरम् । कस्मादिदं—इति पुनः प्रश्नः । श्रूयताम्—इत्युत्तरम्—यः दोषगुणयोः सम्यक् सारं विविनक्ति=दोषगुणविवेचनसमर्थो भवति, अथ च स्वयमपि सत्कविः, ईदृशो भावक एव दुर्लभः, यदि काऽपि दैवात् लभ्यते तर्हि स निर्मत्सरो न भवतीति हेतोर्मया काव्यकथैव त्यक्तेति पूर्वेण सम्बन्धः । तत्त्वेति । तत्त्वे वस्तुयाथार्थ्ये अभिनिवेशो यस्य तथाविधो विचारकस्तु यदि सहस्राणां मध्ये कश्चिद्भवेत् तर्हि एक एव । तदेव दर्शयति—शब्दानामिति । यः शब्दानां गुम्फनाविधीन् विविनक्ति, अस्मिन् प्रसङ्गे एतादृशशब्दनिवेशेनेदृशश्चमत्कारो जायते, एतादृशशब्दपरिहारेणायं विशेषो भवेदित्यादि शब्दविन्यासप्रकारं यः सम्यग्विचारयतीत्यर्थः । यश्च सूक्तिं दृष्ट्वा ऽन्तरात्मना प्रहृष्यति । यश्च रसरूपममृतं सान्द्रं यथा स्यात्तथा लेढि=आस्वादयति । यश्च तात्पर्यमुद्रां विचिनुते, कविना कुत्र किन्तात्पर्येण किंपदं

स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च।
कवेर्भवति ही! चित्रं किं हि तद्यन्न भावकः ॥
काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना।
नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश ॥
सन्ति पुस्तकविन्यस्ताः काव्यबन्धा गृहे गृहे।
द्वित्रास्तु भावकमनःशिलापट्टनिकुट्टिताः ॥
सत्काव्ये विक्रियाः काश्चिद्भावकस्योल्लसन्ति ताः।
सर्वाभिनयनिर्णीतौ दृष्टा नाट्यसृजा नयाः ॥

---

विन्यस्तामित्यादि कवितात्पर्यं विचारयितुं यः प्रभवति। विवेक्तृविरहात् विवेचकाभावात् अन्तर्मुखं मुखस्यान्तरेव श्रोत्रभावात्सूक्तीरवस्थाप्य ताम्यतां क्लेशमनुभवतां केषांचिदेव कदाचिदेव पुण्यैर्नतु पुण्येन काव्यश्रमज्ञः काव्यनिर्माणपरिश्रमाभिज्ञो जनः सङ्घटते लब्धो भवतीत्यर्थः। **स्वामीति**। भावकः काव्यार्थभावनापरिपक्वबुद्धिः सज्जनः कवेः कृते स्वामी, दोषाच्छादनादिना रक्षकत्वात्पालकः, मित्रं, सुकविसमाजे कविगुणप्रख्यापनादुपकर्ता सुहृद्, मन्त्री, सद्विचारस्फुरणसाहाय्यकरणात्सचिवः, शिष्यः, कविसूक्तीनां सादरं निषेवणादन्तेवासी, आचार्यः, गुणोपादानदोषहानाद्युपदेशकत्वाद् गुरुः, इत्थं भावकः कवेः कृते किं न भवति सर्वएव सः ही इत्याश्चर्ये। **काव्येनेति**। तन्मनोमात्रवृत्तिना कवेर्मनस्येव कृतनिवासेन तस्य कवेः काव्येन किम्। न किमपि प्रयोजनं तादृशकाव्येनेति भावः। भावकैर्यस्य निबन्धा दश दिशो न नीयन्ते=भावकद्वारा यस्य काव्यं सर्वत्र न श्लाघ्यते तस्य कवेः काव्यं व्यर्थमेवेत्याशयः। **सन्तीति**। पुस्तकविन्यस्ताः पुस्तकेषु लिखिताः काव्यबन्धा गृहे गृहे प्रतिगृहं भूयस्त्वेनेत्यर्थः। सन्ति, तैर्न प्रयोजनम्। भावकाना मनएव शिलापट्टं निकषोपलस्तत्र निकुट्टिताः परीक्षितास्तु द्वित्रा एव विरला एवेत्यर्थः। **सत्काव्यइति**। सत्काव्येऽपि भावकस्य=भावकहृदये इत्यर्थः। काश्चिदनिर्वाच्या विक्रिया विकारा उल्लसन्ति स्फुरन्ति, या नाट्यसृजा ब्रह्मणा नाट्याचार्येण भरतेनाऽपि वा, अत्र अपिरध्याहार्यः। सर्वविधाङ्गिकाभिनयनिर्णयविधौ न दृष्टा न लक्षिताः।

वाग्भावको भवेत्कश्चित्कश्चिद्हृदयभावकः।
सात्त्विकैराङ्गिकैः कश्चिदनुभावैश्च भावकः॥
गुणादानपरः कश्चिद्दोषादानपरोऽपरः।
गुणदोषाहृतित्यागपरः कश्चन भावकः॥१९
अभियोगे समानेऽपि विचित्रो यदयं क्रमः।
तेन विद्मः प्रसादोऽत्र नृणां हेतुरमानुषः॥ २०
न निसर्गकविः शास्त्रे न क्षुण्णः कवते च यः।
विडम्बयति सात्मानमाग्रहग्रहिलः किल॥ २१
कवित्वं न स्थितं यस्य काव्ये च कृतकौतुकः।
तस्य सिद्धिः सरस्वत्यास्तन्त्रमन्त्रप्रयोगतः॥ २२

---

अथ भावकानां वैचित्र्यं दर्शयति—**वागिति** । **गुणेति** । कश्चित् वाग्भावकएव, कवेः सौशब्द्यमेव पर्यालोचयितुं प्रभवति, कश्चित् हृदयभावक एव, कवेः सूक्तिमाकर्ण्य 'अत्रेद कविहृदयम्' इत्येव विचार यितु प्रभवति। कश्चिद्भावको वचसा न किमपि प्रकाशयति, किन्तु आङ्गिकसात्विकानुभावानेव प्रदर्श्य कविसूक्तिश्रवणजन्यमुल्लास प्रकटयति कश्चित् भावको गुणमात्रमुपादत्ते। कश्चिद्भावको गुणेषु निरपेक्षः केवलं दोषानेव पश्यति-सं पुरोभागी शूकरोपमो भावकः। कश्चिद्भावको गुणान् गृह्णाति, दोषांश्च त्यजति। भावकवैचित्र्ये हेतुमुपन्यस्यति—**अभियोगे इति**। अभियोगे समानेपि, काव्ये भावकभेदाद्विविधा भावनाः समुल्लमन्ति, तेन हेतुना वयमित्थं विद्मो जानीमः, यत्त प्रसादे नृणा हेतुरमानुषः मानुषबुद्धेरगम्यः। कश्चित् गुणैः प्रसीदति, कश्चित् दोषान् दृष्ट्वा समुच्छलति, कस्यचिद्रसेष्वेवानुग्रहः, कश्चिदलङ्कारानेव बहु मन्यते इत्यादि। एतावता भावकानां मनःप्रसादकारणमिदमेवेति-परिच्छेत्तुमशक्यमिति भावः। **ननिसर्गेति**। यः शास्त्रे न क्षुण्णोऽपि च कवते स आग्रहग्रहिलः सन् आत्मानं विडम्बयते प्रतारयति। कवित्वप्राप्तये सत्सम्प्रदायशुद्धं शास्त्रं नैसर्गिकी च प्रतिभावश्यकीति भावः। कवित्वप्राप्त्युपायमाह—**कवित्वमिति**। यः काव्येषु कुतूहली काव्य ज्ञातुं जनयितुं -चेच्छति नैसर्गिकप्रतिभाभावात्कविता च यस्य न स्फुरति, तस्य सारस्वत-

पदान्तरं वेत्ति सुधीः स्ववाक्यपरवाक्ययोः ।
तदा स सिद्धो मन्तव्यः कुकविः कविरेव वा ॥ २३
कारयित्रीभावयित्र्याविताीमे प्रतिभाभिदे ।
अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम् ॥

॥ इति राजशेखरकृतौ काव्यमीमांसाया कविरहस्ये प्रथमेऽधिकरणे चतुर्थोऽध्यायः पदवाक्यविवेकः । काव्यविशेषेषु कारयित्री नाम समीक्षा ॥

---

मन्त्राराधन, ब्राह्मीवचादिचूर्णसेवनाद्युपायैः कवित्वरूपा सिद्धिर्भवतीत्यर्थः । **पदेति** । सुधीः पण्डितो यदा स्ववाक्यपरवाक्ययोरन्तरं भेदं वेत्ति, तदा स सिद्धः पदपरिपाकसिद्धो मन्तव्यः । अन्यथा स्ववचःपरवचोऽन्तरज्ञानाभावे कुकविः अथवा कविशब्दोऽपि तत्र नोपयुक्तः, स कपिरेव मर्कटएव । मर्कटो यथा रत्नकाचयोर्भेदमजानन् रत्नं चूर्णीकृत्य काच श्लाघते तथाऽयमपीति भावः । अध्यायार्थमुपसंहरति—**कारयित्रीति** । इमे पूर्वोक्तप्रकारे कारयित्रीभावयित्र्यौ तदाख्ये प्रतिभाया भिदे भेदौ सोदाहरणं प्रपञ्चिते । अथाऽतः परं काव्यस्य मुख्यकारणस्वरूपामत एव मातरं व्युत्पत्तिं कथयिष्यामः पञ्चमाध्याये इति शेषः ।

इति श्रीमत खिस्ते—इत्युपनामकभैरवनायकतनूजानि साहित्याचार्य श्रीनारायणशास्त्रिप्रणीताया काव्यमीमांसाचन्द्रिकाया चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः काव्यपाककल्पः ।

"बहुज्ञता व्युत्पत्तिः" इत्याचार्याः । सर्वतोदिका हि कविवाचः । तदुक्तम्—प्रसरति किमपि कथञ्चन नाभ्यस्ते गोचरे वचः कस्य ।
इदमेव तत्कवित्वं यद्वाचः सर्वतोदिकाः ॥

"उचितानुचितविवेको व्युत्पत्तिः" इति यायावरीयः ।

---

चतुर्थाध्यायमुपसंहरन् ग्रन्थकारः "अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम्" इति प्रतिज्ञातवान् । सैव व्युत्पत्तिरस्मिन्नध्याये सप्रभेदा सलक्षणा सोदाहरणा च निरूपयिष्यते । प्रसङ्गाद्व्युत्पत्तितारतम्यसम्भवाः पाकप्रभेदा अपि दर्शयिष्यन्ते ।

अथ प्रतिज्ञातां व्युत्पत्तिं दर्शयति–**बहुज्ञतेति** । अनेकविषयावगाहित्वमेव सेत्यर्थः । वर्णनीयपदार्थसार्थसमर्थनसमर्थसर्वविषयविचारचातुरीचणत्वं व्युत्पत्तिरिति भावः । इदमाचार्याणामभिमतम् । अमुमेवार्थं विवृणोति–**सर्वतोदिक्का हीति** । हि=यस्मात्कारणात् कवीनां=काव्यार्थभावनापरिपक्वबुद्धीनां परिणतवचसां महाकवीनां वाच उक्तयः सर्वासु दिक्षु गच्छन्तीति तथाविधाः । यस्य भावकस्य यावती बुद्धि स्तावदर्थसम्पादनसमर्था इत्यर्थः । कामदुघा इति यावत् । उक्तार्थं समर्थयति–**तदुक्तम्–प्रसरतीति** । अभ्यस्ते=पुनः पुनरनुशीलनादिना संस्कारदार्ढ्यमापादिते गोचरे=विषये कस्यचन=कस्यापि पुरुषस्य, सर्वस्यैवेत्यर्थः । कथञ्चन=येन केनाप्युपायेन वचः न प्रसरति किमिति काकुः । प्रसरत्येवेत्यर्थः । दृढसंस्कारमापन्नं विषयमधिकृत्य येन केनाऽपि यत्किमपि वक्तुं शक्यत एव, न तावता किमपि वैशिष्ट्यम्भवतीति भावः । तत्=प्रसिद्धं कवित्वमिदमेव । अयमेव गुणः कवित्वव्यपदेशप्रयोजकः यत् वाचः उक्तयः सर्वतोदिक्काः स्यु. । अनभ्यस्तेपि सद्योवर्णनसामर्थ्यं चेत्तदैव कवित्वव्यपदेशार्हतेत्यर्थः । ईदृशसामर्थ्यं बहुज्ञतात्मकव्युत्पत्त्यधीनमिति बहुज्ञतैव व्युत्पत्तिरित्याचार्याः प्राहुः । बहुज्ञताफलात्मना स्वमतेन व्युत्पत्तिं लक्षयति–**उचितेति** । उचितानुचितयोर्योग्यायोग्ययोर्विवेको विचारपुरःसरमादानपरित्यागावेव व्युत्पत्तिरिति यायावरीयस्य राजशेखरस्य ग्रन्थकर्तुर्मतम् । बहुज्ञता व्युत्पत्तिरित्याचार्योक्तमुचितमेव । तत्रा-

"प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसी" इत्यानन्दः। सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति। तदाह—

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः। २
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते॥
शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते।
एतत्किं शिरसि स्थितं मम पितुः खण्डं सुधाजन्मनो
लालाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगाः।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः
प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः॥

---

नेकविषयपरिज्ञानवशादेव योग्यस्थाने तत्स्थानोचितशब्दार्थालङ्काररसादिनिबन्धनं तत्परिपन्थिना च निराकरणं यया विधीयते सैव व्युत्पत्तिरित्यर्थः। प्रतिभाव्युत्पत्त्योस्तारतम्यमानन्दवर्द्धनाचार्यमतेनाह—**प्रतिभेति**। प्रतिभाव्युत्पत्त्योर्मध्ये प्रतिभैव प्रशस्यतरा इति आनन्दवर्द्धनाचार्या वदन्तीत्यर्थः। तत्र हेतुमाह **साहीति**। हि=यतः सा प्रतिभा कवेः काव्यकर्तुरव्युत्पत्तिकृतं व्युत्पत्त्यभावसम्भवमशेषं कृत्स्नं दोषं रसास्वादप्रतिबन्धात्मकमाच्छादयति तिरोधत्ते दूरीकरोतीत्यर्थः। उक्तार्थं समर्थयन्नाह—**अव्युत्पत्तिकृत इति**। कवेरव्युत्पत्तिकृतो व्युत्पत्त्यभावसम्भवो दोषः शक्त्या प्रतिभया संव्रियते आच्छाद्यते। यो दोषस्त्वशक्तिकृतः प्रतिभाया अभावादुत्पन्नः स झटिति तत्क्षणं झगिति वा अवभासते स्फुरति। प्रतिभाप्रस्तावे शक्तिरियं कुतः समापतितेति शङ्कयाऽऽह—**शक्तिशब्दश्चायमिति**। अयम्=पूर्वोक्तपद्यस्थः शक्तिशब्दः प्रतिभाख्यशक्त्यभिप्रायेण प्रयुक्त इत्यर्थः। प्रतिभाशक्तिवशादव्युत्पत्तिकृतदोषनिवारणस्योदाहरणमाह—**एतत्किमिति**। तातं शिवं निरीक्ष्य तदङ्गवर्त्तिभूषणादिविषये बालकस्य कुतूहलिनः कुमारकार्तिकेयस्य पार्वतीं प्रतिप्रश्नास्तदुत्तराणि चात्र वर्तन्ते।

कुमारः पार्वतीं पृच्छति हे मातः! मम पितुः शिरसि स्थितमेतत्किम्? पार्वत्या उत्तरम्—एतत् सुधाजन्मनः सुधासूतेश्चन्द्रस्य खण्डं कलेत्यर्थः। पुनः प्रश्नः—लालाट=ललाटवर्त्ति इदं किम्? पुनरुत्तरम्—इदं विलोचनम्—

"व्युत्पत्तिः श्रेयसी" इति मङ्गलः ॥ सा हि कवेरशक्तिकृतं दोषमाच्छादयति । तथा हि—

कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि ।
वैदग्धीचितचित्तानां हेया शब्दार्थगुम्फना ॥

---

तृतीयनेत्रमित्यर्थः । पुनः प्रश्नः-अस्य मम पितुः हस्ते किम् ? पुनरुत्तरम्—पन्नगाः-सर्पभूषणानीत्यर्थः । इत्थमेवंप्रकारेण क्रौञ्चरिपोः=कुमारस्य दिग्वाससो दिगम्बरस्य शूलिनो विषये प्रश्ने उपस्थिते सति वामकरेण यः उपरोधः स्वमुखाच्छादनं तेन सुभग सुन्दरं यथा स्यात्तथा देव्याः पार्वत्या. स्मितं वः पातु रक्षत्वित्यर्थः । अत्र केचित् वामकरोपरोधसुभगमिति क्रौञ्चरिपुमुखस्याच्छादनं शूलिना कृतमिति व्याचक्षते, तदस्मभ्यं न रोचते । तत्र कतरद्व्याख्यान समीचीनमिति सहृदयाः स्वयमेव विभावयन्तु । अत्र हास्यरसपरिपोषमिच्छता कविना तथाविधः सन्दर्भः प्रकटितोऽपि शब्दैर्न स्फुट प्रतीयत इत्यत्र कवेरव्युत्पत्तिरेव कारणम् । तथाऽपि 'वामकरोपरोधसुभग देव्याः स्मित' मित्युक्त्यर्थसौन्दर्यविच्छित्तिविशेषमाहिम्ना साऽव्युत्पत्तिस्तिरोधीयत इति । पूर्वमानन्दवर्द्धनाचार्येण प्रतिभाव्युत्पत्त्योः प्रतिभायाः प्रशस्यतरत्वमुक्तम् , इदानीं तद्विपरीतं मङ्गलाचार्यमतमाह-व्युत्पत्तिः श्रेयसीति । प्रतिभापेक्षया व्युत्पत्तिरेव प्रशस्यतरेति मङ्गलाचार्याणामाशय. । पूर्वोक्तार्थसमर्थने हेतुमाह-साहीति । सा=व्युत्पत्तिर्हि कवेरशक्तिकृत प्रतिभाविरहजन्यं अशेषं सम्पूर्णं दोषमाच्छादयति तिरोधत्ते इत्यर्थः । तदेवाह-कवेरिति । काव्यवर्त्मनि=काव्यमार्गे कवेरशक्तिः प्रतिभाराहित्यं व्युत्पत्त्या सन्नियते तिरोधीयते । वैदग्ध्या=काव्यार्थभावनाजन्यपरिपाकविशेषेण सहृदयताख्येन चितं व्याप्त चित्तं येषा तेषाम् । तैरित्यर्थः । शब्दार्थगुम्फना=शब्दार्थालङ्कारसंयोजनम् । हेया ऽनादरणीयैवेत्यर्थः । ये खलु विदग्धा रसमनुभवन्ति तेषा यमकानुप्रासोपमारूपकादिशब्दार्थालङ्कारनिबन्धने न भूयानादर इत्यर्थः । अत्र केचित् 'शब्दार्थगुम्फना' इत्यत्र 'शब्दस्य गुम्फना' इति पाठ कल्पयित्वा ईषन्निमीलितलोचनानां सुधिया विवेचनमभ्यर्थयन्ते, तन्निरीक्ष्य विस्मयविस्फारिताक्षा वयं 'अहो वैदग्ध्यम्' इति भणन्तो मौनमालम्बामहे । अशक्तिकृतदोषति-

व्युत्पत्तिर्यथा—कृतः कण्ठे निष्को नहि किमुत तन्वी मणिलता
कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि ॥
न कौशेयं चित्रं वसनमवदातं तु वसितं
समासन्नीभूते निधुवनविलासे वनितया ॥

"प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ" इति यायावरीयः। न खलु लावण्यलाभादृते रूपसम्पदृते रूपसम्पदो वा लावण्यलब्धिर्महते

---

रोधायिकाया व्युत्पत्तेरुदाहरणमाह—**व्युत्पत्तिर्यथा—कृतः कण्ठे** इति। चिरकालप्रवासात् प्रियस्य प्रत्यागमनमाकर्ण्य तत्स्वागतोत्सुकाया वासकसज्जाया नायिकाया वर्णनमिदम्। निधुवनविलासे=सुरतोत्सवे समासन्नीभूते=समीपमागते सति। वनितया=प्रियसमागमोत्कण्ठितया नायिकया कण्ठे निष्कः=सौभाग्यसूचकः सुवर्णाभरणविशेषोऽपि न कृतो न धारितः। तन्वी सूक्ष्मा मणिलता मणिमयो हारो न धृत इति किं वक्तव्यम्। निष्कमणिलतादीनामाश्लेषादौ प्रतिबन्धकत्वात्तद्धारणं न कृतमिति तात्पर्यम्। कुण्डलमुचि=प्रथमत एव कुण्डलरहिते कर्णे कृशं सूक्ष्ममपि लीलापत्रं न निहितं न स्थापितम्। अत्र श्रवसीत्येकवचनमविवक्षितम्, कर्णयोरित्यर्थः। एवमेव चित्रमनेकवर्णं कौशेयं कृमिकोशजन्यं चिक्कणं पट्टाम्बरं न वासितम्, अपि तु शुभ्रवर्णं वसनं कार्पासतन्तुजमंशुकं परिहितम्। अत्रेदं तत्त्वम्—वासकसज्जानायिकायाः प्रसाधनवर्णनपरेऽस्मिन् पद्ये सम्भोगशृङ्गारस्य व्यङ्ग्यतया तदभिव्यञ्जकाः कोमला वर्णा एव प्रयोक्तुमुचिताः, किन्तु कविनाऽशक्तिवशात्तत्प्रयोगो न कृतः प्रत्युत शृङ्गारपरिपन्थिनः 'ण्ठे' 'ष्कः' 'सन्नी' 'कृ' 'त्रं' इत्यादयो दुःश्रवा एव वर्णाः प्रयुक्ताः, तथा चैतैर्वर्णैः शृङ्गारस्य परिपोषो न भवतीति प्रतिभाभावजन्या कवेरशक्तिः प्रकटीभवन्त्यपि सम्भोगशृङ्गारानुकूलप्रसाधननेपथ्यवर्णनात्मिकया कवेर्व्युत्पत्त्या तिरोधीयते इति। अथात्र विषये स्वमतं प्रकाशयति—**प्रतिभाव्युत्पत्ती—इति**। प्रतिभा च व्युत्पत्तिश्च ते मिथोऽन्योन्यं समवेते सङ्गते एव श्रेयस्यौ प्रशस्यतरे भवत इति राजशेखरमतम्। न केवलमेकलया प्रतिभया व्युत्पत्त्या वा काव्यस्य प्रशस्यत्वं सम्पाद्यते, अपि तु प्रतिभाव्युत्पत्त्योरुभयोरपि सङ्गमेनेति भावः। लौकिकदृष्टान्तेनोक्तार्थं समर्थयति—**न खलु**

सौन्दर्याय । उभययोगो यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनयाद्दण्डपादो भवान्याः ॥

---

नन्विति । जगति सुन्दर इति व्यवहारः खलु रूपसम्पदं लावण्यं चापेक्ष्यैव भवति । तत्र यथा केवलया रूपसम्पदा, केवलेन लावण्येन वा सुन्दरत्वं न सम्पद्यते, अपि तु लावण्यरूपसम्पदोरुभयोर्योगेनैव सौन्दर्यं सम्पद्यते; तथैव प्रकृते प्रतिभाव्युत्पत्त्योरुभयोर्योग एव काव्यस्य प्रशस्यत्वं सम्पादयति । इह लावण्यरूपसौन्दर्यशब्दाः सामान्यतो लोके समानार्थका इति यद्यपि प्रयुज्यन्ते, तथाऽपि सूक्ष्मेक्षिकया विचारे क्रियमाणे तेषु प्रत्येकं प्रवृत्तिनिमित्तभेदाद्भिन्नत्वमेव । तरलतेजोविशेषो लावण्यम् । 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति कालिदासोक्त्यनुसारेण प्रसाधननेपथ्यादिनिरपेक्षमेव यन्नयनमोहनं भवेत्तद्रूपम् । निरवद्यं संश्लिष्टमवयवसंस्थानमेव सौन्दर्यमिति तेषां प्रत्येकं भेदाः । प्रतिभाव्युत्पत्त्योरुभयोर्योगमुदाहरति—जङ्घेति । महाकविना भट्टबाणेन रचिते चण्डीशतके चण्डीचरणवर्णनपरं पद्यमिदम् । प्रदोषे शिवस्य नृत्यं प्रसिद्धमेव, इत्थं नृत्यन्तं शिवं दृष्ट्वा भवान्या अपि तदनुकरणेच्छा प्रादुर्भूता—इत्यत आह—भर्तुर्नृत्यानुकारे इति । भर्तुर्नटराजस्य भवस्य नृत्यस्य पदार्थाभिनयात्मनोऽङ्गविक्षेपस्य अनुकारेऽनुकरणे प्रवृत्तो भवान्या दण्डपादः ऊर्ध्वीकृतश्चरणो जयतीति सम्बन्धः । तमेव विशिनष्टि—निजतन्विति । निजा=भवानीसम्बन्धिनी या तनुः शरीरं सैव स्वच्छा=निर्मला लावण्यवापी तस्यां सम्भूतं यदम्भोज कमलं तस्य शोभां श्रियं विदधदित्यर्थः । अत्र तनौ वापीत्व लावण्ये जलत्वं चरणेऽम्भोजत्वं च परस्परसापेक्षम् । अम्भोजत्वसाधकविशेषणानि जङ्घाकाण्डेत्यादीनि । जङ्घाकाण्डमेव ऊरु महत् नाल नालदण्डो यस्मिन्, नखानां किरणा एव लसन्ति केसराणि तेषामाल्या पङ्क्त्या करालो व्याप्तो निम्नोन्नतो वा । प्रत्यग्रस्य नवस्य तत्काललिप्तस्य अलक्तकस्य यावकस्य आभाया. कान्तेः

प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते । स च त्रिधा । शास्त्र-कविः काव्यकविरुभयकविश्च । "तेषामुत्तरोत्तरीयो गरीयान्" इति श्यामदेवः । "न" इति यायावरीयः । यथा स्वविषये सर्वो गरीयान् । न हि राजहंसश्चन्द्रिकापानाय प्रभवति, नापि चकोरोऽद्भ्यः क्षीरोद्धर-

---

प्रसरा एव किसलयानि पत्राणि यस्य । मञ्जुः सुन्दरो मञ्जीरः पादभूषणमेव भृङ्गो भ्रमरो यस्मिन् । एवंविधो भवान्या दण्डपादो जयति सर्वोत्कर्षेण वर्तते इत्यर्थः । अत्र भवान्या दण्डपादे निजतनुस्वच्छलावण्यवापीसम्भूताम्भोजारोपस्य 'सम्भूताम्भोजशोभां विदधत्' इत्युक्तरुपमानारोपस्वरूपत्वाभावान्निदर्शना । तत्साधकानि जङ्घाकाण्डेत्यादि चत्वारि रूपकाणि । इदमत्र तत्त्वम्—निपूर्वकस्य धाधातोः करणार्थकत्वाद्विदधदित्यस्य धारणार्थेऽवाचकत्वं दोषः । एवमेव निजतनुस्वच्छलावण्यवापीत्पादौ च तनुपदार्थस्य भवान्यायोगोऽभिप्रेतः, किन्तु स तथा न घटते, निजपदार्थस्य प्रधानक्रियान्वयिकारकपदार्थान्वितत्वात् दण्डपादस्य निजपदार्थेनान्वयः प्रतीयत इत्यभवन्मतयोगो नाम दोषः । अत्रेदृशदोषसद्भावेऽपि कविप्रतिभाव्युत्पत्तिवशोन्मीलितनिदर्शनारूपकालङ्कृतिचमत्कृतिः प्रधानतः प्रतीयमाना स्वानुभावेन दोषमाच्छादयतीति उभययोगोदाहरणमिदम् । कविशब्दप्रयोगे योग्यतामाह–**प्रतिभेति** । न केवलं छन्दःपूरणमात्रेण कविर्भवति, अपि तु प्रतिभाव्युत्पत्तिभ्यां युक्तः कविरेव कविव्यपदेशार्ह इत्यर्थः । कविं विभजते–**सचेति** । सः कविस्त्रिधा त्रिप्रकार इत्यर्थः । १ शास्त्रकविः २ काव्यकविः ३ शास्त्रकाव्योभयकविरिति तस्य त्रयः प्रभेदा इत्यर्थः । तेषां मध्ये यथोत्तरं प्रशस्यत्वमिति श्यामदेवमतम् । ईदृशं तारतम्यं न समञ्जसमिति स्वमतम् । स्वमतं समर्थयितुमाह—**यथेति** । स्वाभ्यस्ते विषये सर्वएव परापेक्षया प्रकर्षवान् भवतीति श्यामदेवोक्तं तारतम्यं न युक्तमित्यर्थः । दृष्टान्तमुखेन तदेवाह—**नहीति** । नीरक्षीरविवेककुशलोऽपि राजहंसश्चन्द्रिका पातुं न प्रभवति, एवं चन्द्रिकाचमनचतुरोऽपि चकोरो नीरात् क्षीरमुद्धर्तुं न शक्नोति । नैतावता हंसचकोरयोः कश्चिदुत्कृष्टः परोऽपकृष्ट इति गदितुं शक्यम् । स्वस्वविषये तयोर्निपुणत्वात् इत्यर्थः । अथ स्वमतेन तेषां त्रयाणां

शाय। यच्छास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति। यत्काव्यकविः शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति। उभयकविस्तूभयोरपि वरीयान्यद्युभयत्र परं प्रवीणः स्यात्। तस्मात्तुल्यप्रभावावेव शास्त्रकाव्यकवी। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे। यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति। काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि। तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं

---

कविभेदाना मिथो भेदकं दर्शयन्नाह—**यच्छास्त्रकविरिति**। यत्=यस्मात्कारणात् शास्त्रकवि.=शास्त्रेषु सविशेषं कृतश्रमोऽपि काव्येषु लब्धसाधारणप्रवेशः कविः स्वोक्तिषु रससम्पदं विच्छिनत्ति=रसाभिव्यञ्जनसमर्थशब्दार्थसन्निवेशं कर्तुं न पारयति, एवमेव यस्मात्कारणात् काव्यकवि=काव्येषु लब्धसविशेषव्युत्पत्तिरपि शास्त्रेषु नाधिगताधिकव्युत्पत्तिः कविः, तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति=शास्त्रीयान् पदार्थान् तत्तच्छास्त्रीयपारिभाषिकशब्दैर्वर्णयितुं न प्रभवति, तस्मात्तावुभावप्यन्योन्यसापेक्षाविति समानावेव। उभयकवि=शास्त्रेषु काव्येषु च लब्धोत्कृष्टप्रबोधः कवि., शास्त्रकविकाव्यकव्योरपेक्षया स एव श्रेष्ठः, यदि स वस्तुतः शास्त्रकाव्ययोः समानभावेन प्रवीणः स्यात्। इत्थमुपदर्शितरीत्या शास्त्रकाव्यकवी समानावेव। तयो. परस्परोपकारकत्व परस्परोपकार्यत्वं च वक्तु शक्यम्। यतः शास्त्रस्य सस्कारः साधारणः प्रवेश एव काव्यरचनाया वैचित्र्यमुत्पादयति, सर्वदा शास्त्रैकमग्नत्वन्तु सुकवितासम्पादनौपयिकशब्दार्थस्फूर्तिं प्रतिबध्नाति। एवमेव काव्येषु सस्कारः=काव्यार्थभावनाभावितत्वं शास्त्रीयकर्कशपदार्थानामपि कान्तासम्मितविधया सरसभावेन वर्णने साहाय्यं कुरुते, सर्वदा काव्यैकमग्नत्वं तु बुद्धिं कोमला कुरुते, यथा सा समधिकविचारसापेक्षान् शास्त्रीयान् पदार्थान् ग्रहीतु न प्रभवेत्। अथ त्रिधा भिन्नान् कवीन् प्रत्येकं विभजते—**तत्रेति**। तत्र=तेषु कविषु शास्त्रकविः त्रिधा=त्रिप्रभेद इत्यर्थः। तत्र यः शास्त्र विधत्ते=शास्त्रीयान् ग्रन्थान् विधत्ते=निर्माति, स एकप्रकारः। यश्च शास्त्रे काव्यं विधत्ते=शास्त्रीयपदार्थान् काव्यरूपेण ग्रथ्नाति स द्वितीयः

संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते। काव्यकविः पुनरष्टधा। तद्यथा रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति। तत्र रचनाकविः—

लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धगोलै- ७
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु।
खण्डेषूद्दण्डपिण्डीतगरतरलकाः प्रापिरे येन वेला-
मालङ्घ्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः॥

त्रिधा च शब्दकविर्नामाख्यातार्थभेदेन। तत्र नामकविः—

---

प्रकारः। यश्च काव्येऽपि शास्त्रार्थं निधत्ते=काव्यपदार्थान् शास्त्रीयपरिभाषया-निबध्नाति—स तृतीयः प्रकारः। इत्थमिमे शास्त्रकवेस्त्रयो भेदा व्याख्याताः। अथ काव्यकविं विभजते—**काव्यकविरिति**। १ रचनाकविः २ शब्दकविः ३ अर्थकविः ४ अलङ्कारकविः ५ उक्तिकविः ६ रसकविः ७ मार्गकविः ८ शास्त्रार्थकविरित्यष्टभेदैर्भिन्नः काव्यकविरित्यर्थः। तत्र रचनाकविर्नाम श्रुतिसुखा प्रगाढप्रौढपदबन्धा रचना कर्तुं यः प्रभवति सः। रचनाकविकाव्यमुदाहरति—**लोलदिति**। येन राज्ञा वेला मर्यादां समुद्रतीरमर्यादामित्यर्थः। आलङ्घ्य=आसमन्तात लङ्घयित्वा षण्डेषु=पद्मसमूहेषु गन्धवाहा वायवः प्रापिरे निषेविताः। कीदृशेषु षण्डेष्वित्याह—लोलत् चञ्चलं यल्लाङ्गूलं पुच्छ तदेव वल्ली लता तया वलयितो मण्डलितो बकुलानोकहानां बकुलद्रुमाणा स्कन्धगोलः शाखासमूहो यैस्तैः। निनदद्भिः शब्दं कुर्वाणै गोलाङ्गूलैः कृष्णमुखैर्वानरैः कर्तृभिः प्रतिरसितेन प्रतिध्वनिना जरन्त्यो जीर्णाः कन्दरा एव मन्दिराणि येषु तेषु। कीदृशा वायव इत्याह—उद्दण्डानामुन्नतदण्डानां पिण्डीतगराणां पिण्डखर्जूराणां तरलकाश्चाञ्चल्यसम्पादकाः कम्पयितार इत्यर्थः। किञ्च, उत्ताला उन्नता गभीरा वा ये तल्लाः सरांसि तेषु स्फुटितानां विकासितानां पुटकिनीनां पद्मिनीनां बन्धवस्तद्गतसौरभयुक्ता इत्यर्थः। अस्मिन् पद्ये प्रौढा प्रगाढा श्रुतिसुखा च रचना वर्त्तते इति रचनाकविकाव्योदाहरणमिदम्। अथ शब्दकविं विभजते-**त्रिधेति**। शब्दस्य नामाख्यातभेदभिन्नत्वात् १ नामकविः २ आख्यात कविः

विद्येव पुंसो महिमेव राज्ञः प्रज्ञेव वैद्यस्य दयेव साधोः।
लज्जेव शूरस्य मृजेव यूनो विभूषणं तस्य नृपस्य सैव॥

आख्यातकविर्यथा—

उच्चैस्तरां जहसुराजहृषुर्जगर्जु- राजघ्निरे भुजतटीनिकरैः स्फुरद्भिः।
सन्तुष्टुवुर्मुमुदिरे बहु मेनिरे च वाचं गुरोरमृतसम्भवलाभगर्भाम्॥

नामाख्यातकविः—

हतत्विषोऽन्धाः शिथिलांसबाहवः स्त्रियो विषादेन विचेतना इव।
न चुक्रुशुर्नो रुरुदुर्न सस्वनुर्न चेलुरासुर्लिखिता इव क्षणम्॥

---

३ नामाख्यातकविरिति तस्य त्रयः प्रभेदा इत्यर्थः। तत्र नामात्मकशब्द प्रधानरचनाशीलो नामकविरित्यर्थः। नामकविकाव्यमुदाहरति—**विद्येवेति**। पुंसो विद्या यथा भूषणम्, राज्ञो महिमा यथा, वैद्यस्य प्रज्ञा यथा, साधोर्दया यथा, शूरस्य लज्जा यथा, यूनो मृजा (शुद्धिरौज्वल्यम्) यथा भूषणम्, तथा तस्य नृपस्य सैव भूषणमित्यर्थः। अत्र विद्यादयः सर्वेऽपि नामशब्दा एव प्रयुक्ता नत्वेकोऽप्याख्यातशब्दः प्रयुक्त इति नामकविकाव्योदाहरणमिदम्। यः कविराख्यातशब्दानेव बहुशः प्रयुङ्क्ते स आख्यातकविः। आख्यातकविकाव्योदाहरणमाह—**उच्चैस्तरामिति**। क्षीरसमुद्रादमृते मथ्यमाने सति तदमृतं सर्वैरेव देवैर्लप्स्यते इति बृहस्पतेर्वाचमाकर्ण्य देवानां प्रहर्षस्य वर्णनम्। अमृतस्य सुधायाः सम्भवउत्पत्तिस्तस्य लाभो गर्भे यस्यास्तादृशीं गुरोर्बृहस्पतेर्वाचः श्रुत्वेत्यध्याहार्यम्। ते देवा उच्चैस्तरां जहसुः। आजहृषुः। स्फुरद्भिः करैर्भुजतटानि आजघ्निरे। सन्तुष्टुवु। मुमुदिरे। गुरोर्वाचं बहु मेनिरे च। अत्र प्रायः सर्वे आख्यातशब्दा एव प्रयुक्ता इत्याख्यातकविकाव्योदाहरणमिदम्। यःकविश्च नामशब्दान् आख्यातशब्दांश्च समानतया प्रयुङ्क्ते स नामाख्यातकविः। नामाख्यातकविकाव्यमुदाहरति—**हतेति**। प्रत्यग्रजातपतिनिधनशोकाना विधवाना दुरवस्थाया वर्णनमिदम्। पत्युर्मरणेन सौभाग्यापगमात् हतत्विषोऽपगतप्रभा अतएवान्धाः किङ्कर्तव्यविमूढाः, शिथिलांसौ बाहू यासां तथाविधाः विषादेन खेदेन विचेतना इव ताःस्त्रियो न चुक्रुशुर्नो रुरुदुर्न सस्वनुः, किन्तु लिखिता इव न चेलुः।

अर्थकविः—

देवी पुत्रमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे ॥१०
हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयाऽऽलिङ्गिते ।
पायाद्वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो
रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ॥

द्विधाऽलङ्कारकविः शब्दार्थभेदेन । तयोः शब्दाऽलङ्कारः—

न प्राप्तं विषमरणं प्राप्तं पापेन कर्मणा विषमरणं च । ११
न मृतो भागीरथ्यां मृतोऽहमुपगूह्य मन्दभागी रथ्याम् ॥

अत्र पूर्वार्धे नामप्रधाना, उत्तरार्द्धे चाख्यातप्रधाना रचनेति नामाख्यातकविकाव्योदाहरणमिदम् । यश्चालङ्काररसभावादिनिरपेक्षमर्थमात्रमेव वर्णयति सोऽर्थकविः । अर्थकविकाव्योदाहरणमाह—देवीति । पार्वत्याः पुत्रोत्सवप्रसङ्गे शिवगणानां हर्षस्य वर्णनमिदम् । देवी पार्वती पुत्रमसूत, हे गणाः ! नृत्यत, किं तिष्ठत ? इति हर्षात् प्रमदात् उद्भुजे उन्नमितभुजाग्रे उदाहृतगिरा कृतहर्षसूचकशब्दया चामुण्डया तन्नामकस्त्रीगणविशेषेण आलिङ्गिते भृङ्गिरिटौ तन्नामके गणे सति जिता देवदुन्दुभेर्घनध्वानस्य प्रवृत्तिर्येन सा, अन्योन्यस्य परस्परस्य अङ्के निपातेन जर्जरं भग्नप्रायं जरत् जीर्णं यत् स्थूलास्थि तस्माद्‌जन्म उत्पत्तिर्यस्य सः तादृशो रवो महान् तुमुलः शब्दो वो युष्मान् पायादित्याशीः । अत्र कविना गणानां हर्षः कीदृशो जात इत्यर्थ एव बाढं वर्णितः, तत्र रसभावालङ्कारादिसन्निवेशे न किञ्चिदपि प्रयतितमित्यर्थकविकाव्योदाहरणमिदम् । अथालङ्कारकविं विभजते—द्विधेति । अलङ्काराणां शब्दार्थान्वयव्यतिरेकानुविधायित्वेन द्विविधत्वात्तत्र तत्र साभिनिवेशप्रवृत्तिः कविरपि द्विविधः शब्दालङ्कारकविरर्थालङ्कारकविश्चेत्यर्थः । **तयोः** । शब्दार्थालङ्कारयोः शब्दस्य प्रथमोपस्थितत्वात् प्रथमं शब्दालङ्कारमुदाहरति—**न प्राप्तमिति** । अनुतप्तस्य कस्याप्युक्तिरियम् । विषमं कठिनं दुर्गमं वा यद्रणं युद्धं तन्न प्राप्तम्, अपि तु पापेन कर्मणा हेतुभूतेन विषद्वारा मरणं प्राप्तम् । एवमेव भागीरथ्यां गङ्गायां गङ्गातीरे इत्यर्थः, न मृतः, किन्तु मन्दभागी अल्पभाग्यो दुर्भाग्यो वा रथ्यां मार्गमुपगूह्य मार्गएवेत्यर्थः, अहं मृत इति श्लोकार्थः । अत्र

अर्थाऽलङ्कारः—

भ्रान्ताजिह्वापताकस्य फणच्छत्रस्य वासुकेः ।
दंष्ट्राशलाकादारिद्र्यं कर्तुं योग्योऽस्ति मे भुजः ॥

उक्तिकविः—

उदरमिदमनिन्द्यं मानिनीश्वासलाव्यं
स्तनतटपरिणाहो दोर्लता लेह्यसीमा ।
स्फुरति च वदनेन्दुर्दृक्प्रणालीनिपेय-
स्तदिह सुदृशि कुल्याः केलयो यौवनस्य ॥

पद्ये 'विषमरणं' 'भागीरथ्या इत्यंशयो. पादान्तयमक, शब्दशक्तिमूलको-विरोधाभासश्चेति शब्दालङ्कारप्राधान्याच्छब्दालङ्कारोदाहरणमिदम् । अर्था-लङ्कारमुदाहरति-भ्रान्तेति । वीरस्य दर्पोक्तिरियम्-भ्रान्ताऽनवस्थिता जि-ह्वारूपा पताका यस्य । मुहुर्मुहुर्जिह्वाचालनपुरःसरं वायुभक्षणस्य सर्पस्वभाव त्वात् । फणएव छत्रं यस्य तस्य वासुके र्नागराजस्य दंष्ट्रारूपा या शलाका छत्रपताकावलम्बभूतो दण्डविशेषस्तस्य दारिद्र्यं दुर्गतिमभावं कर्तुं दंष्ट्रामुत्पा-टयितुमित्यर्थः । मम भुजो बाहुर्योग्यः समर्थोऽस्ति । अत्र जिह्वायां पता-कायाः फणे छत्रस्य दंष्ट्राया शलाकाया स्तन्मूलक वासुकौ राजत्वस्य चारो-पाद्रूपकालङ्कार. तत्कृतैवात्र काव्ये चमत्कृतिरिति अर्थालङ्कारोदाहरणमिदम् । सामान्यतो यदुक्तव्य तदपि सहृदयहृदयाह्लादकेन भङ्ग्यन्तरेण पर्यायोक्तवि-धया ऽभिधीयते तदेवोक्तिवैचित्र्यं नाम । तादृशरचनाचतुरः कविरुक्तिकवि-रामिधीयते । उक्तिकविकाव्यमुदाहरति-उदरमिदमिति । कांचन लोको-त्तररूपसम्पदं सुन्दरीं दृष्ट्वा कश्चित् सहृदयः स्वमित्र वदति । पूर्वदृष्टस्य स-म्प्रति परोक्षस्याऽपि तदुदरस्य वर्णनप्रसङ्गे मानसप्रत्यक्षवशादिदमा निर्देशः । इद=पुरो दृश्यमान अनिन्द्यं सर्वथा निर्दोषं मानिन्यास्तस्याः स्वकीयेन श्वा सेन निःश्वासवायुनाऽपि लाव्यं भङ्गुरं कृशतममिति यावत् । एतादृशमार्द-वशालिन्यास्तस्या निःश्वासोऽपि परापेक्षया सूक्ष्म एव भवेत्, तथा च तादृश-सूक्ष्मनिःश्वासवायुनाऽपि यद्भङ्गुर तस्य कृशत्वं सूक्ष्मत्वं च किं वक्तव्य -मिति भावः । 'सदसत्संशयगोचरोदरी' इत्यादिमहाकविवर्णनात् स्त्रीणासु-

यथा वा—

> प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः १८
> कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।
> परिम्लानप्रायामनुवदति दृष्टिः कमलिनी
> मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥

---

दरुकार्श्यमेव प्रशस्तमिति प्रसिद्धेः । दोरेव लता तस्या लेह्यस्यास्वाद्यस्य सीमा मर्यादास्वरूपः स्तनतटस्य परिणाहो विशालताऽस्ति । यथा काऽपि लता स्वभावतः कञ्चित् दृढं वृक्षमाश्रित्यैव शोभते वर्द्धते च, तथैव वर्णनीयनायिकाया भुजरूपा लता विशाल स्तनतटमाश्रित्यैव राजते इत्यर्थः । लेह्यसीमेत्युक्तेः स्तनतटस्य यावान् परिणाहोऽस्ति तावत्पर्यन्तं दोर्लता प्रसरतीति कथितं भवतीति स्तनयोः पीनत्वं पृथुत्वं च व्यक्तं भवति । दृगेव प्रणाली जलवहनमार्गस्तया निःशेषं पातुं योग्यो वदनमेव इन्दुश्चन्द्रः स्फुरति प्रकाशते । यथा जलपूर्णाद्विशालात् पात्रात् प्रणालिकाद्वारा तत्रत्यं सकलमपि जलं पातुं शक्यते, एवमेव लावण्याम्बुभरितस्य तद्वदनस्य लावण्यं नेत्रप्रणालिकाद्वारा साकल्येनानुभवितुं शक्यमित्यर्थः । तत् तस्मात् कारणात् इह सुदृशि अस्यां सुनयनायां नायिकाया यौवनस्य तारुण्यस्य याः केलयः क्रीडास्ताः कुल्याः अल्पाः सरित एवेति मन्ये । अत्र 'कल्या' इत्यपपाठः । 'कुल्या' इत्येव पाठः समीचीनः प्रतिभाति । यत्तु केचित् "तत्तस्मात् इहास्मिन् सुदृशि सुनयनायां यौवनस्य कल्या मादका केलयः स्फुरन्ति" इति व्याचख्युः, तत्र 'इह—अस्मिन्' इत्यंशः कुत्रान्वेतीति न विद्मः । अन्यत्तारतम्यं सहृदयाः स्वयमेव विचारयन्तु । स्पष्टार्थमुक्तिकविकाव्यस्योदाहरणान्तरमाह—**प्रतीच्छतीति** ।

अत्राऽपि कस्याश्चित्सुन्दर्या रूपसम्पदं निरीक्ष्य मायतो रसिकस्य सखायं प्रत्युक्तिः । अधरः आशोकीम्, अशोकवृक्षसम्बन्धिनीं किसलयपरावृत्तिं नवपल्लवविनिमयं प्रतीच्छति वाञ्छति । एवं कपोलः प्रियविरहजन्यात् पाण्डुत्वात् ताडीपरिणतिं परिणततालशोभां अवतरति धारयति । दृष्टिः कमलिनीं परिम्लानप्रायां प्रायशो म्लानामेव अनुवदति व्यञ्जयति । इति हेतोरियं सुन्दरी माधुर्यं मधुरिमाणं स्पृशति धारयति तनुत्वं कृशत्वं च भजते वहति ।

रसकविः—

एतां विलोकय तनूदरि ताम्रपर्णी-
मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।
यस्याः पयांसि परिणाहिषु हारमूर्त्या
वामभ्रुवां परिणमन्ति पयोधरेषु ॥

मार्गकविः—

मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः
सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च ।

इत्यर्थः । अत्राधरः किसलयतुल्यः, कपोलः परिणततालपत्रसदृशः, दृष्टिः कमलिन्यधिकशोभायुक्ता, इत्याद्यनुक्त्वा उक्तक्रमेण वर्णनात् भङ्ग्यन्तरेणाऽभिधानं भवतीति तदेव सहृदयहृदयाह्लादकमिति उक्तिकविकाव्यस्य स्पष्टार्थमुदाहरणान्तरमिदम् । अथ रसकाविकाव्यमुदाहरति—**एतामिति** । स्वकाव्ये रसमेव मुख्यतया यो निबध्नाति स रसकविः । अत्रोदाहरणे ताम्रपर्ण्याख्याया सरिति विहारकाले नायकस्य सन्निहिता नायिकां प्रत्युक्तिः । हे तनूदरि ! कृशमध्ये ! सुन्दरि ! एतां ताम्रपर्णीं विलोकय । अम्भोनिधौ समुद्रे विवृतेभ्यो विकासिताननेभ्यः शुक्तिपुटेभ्य उद्धृतानि सञ्चितानि सम्पादितानीति वा यस्यास्ताम्रपर्ण्याः सरितः पयांसि जलान्येव परिणाहिषु उत्तुङ्गेष्वित्यर्थः । वामभ्रुवां सुन्दरीणां पयोधरेषु स्तनेषु हारमूर्त्या हारस्वरूपेण परिणमन्ति परिणामं भजन्ते । ताम्रपर्णीजलान्येव शुक्तिषु स्थितानि समुद्रमौक्तिकात्मना परिणमन्तीत्यर्थः । अत्र पयांस्येव पयोधरेषु हारमूर्त्या परिणमन्तीत्युक्तेः काऽपि विच्छित्तिः प्रतीयतइति स्तनकुचादिशब्दाननुक्त्वा 'पयोधरेषु' इत्युक्तम् । अत्र हे तनूदरि ! इति नायककृतनायिकासम्बोधनेनतस्य तस्यामनुरागः प्रतीयते । तथा च तनूदरी नायिका ऽऽलम्बनम् । तस्या उत्तुङ्गपयोधरदर्शनमुद्दीपनम् । वर्णनमनुभावः । एतां विलोकयेत्युक्ते नायकगतमौत्सुक्यं व्यभिचारी चेति विभावानुभावव्यभिचारिसंयोगान्नायकात्मसमवेता नायिकाविषयिणी रतिः सम्भोगशृङ्गारात्मना ऽऽस्वादयोग्यतां गाहते इति रसप्राधान्याद्रसकविकाव्यमिदम् । अथ मार्गकविकाव्यमुदाहरति—**मूलमिति** । मार्गो नाम रीतिस्तत्प्रधानं काव्यं यो निबध्नाति स मार्गकविः । बालकाश्च ता वीरुधश्च तासां कोमललतानामित्यर्थः । मूलं कन्दम् । सुरभयः

शैरीषी कुसुमोद्गतिः परिणमन्मोचं च सोऽयं गणो
ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥

शास्त्रार्थकविः—

आत्मारामा विहितरतयो निर्विकल्पे समाधौ १७
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥

एषां द्वित्रैर्गुणैः कनीयान्, पञ्चकैर्मध्यमः, सर्वगुणयोगी महाकविः ।

---

सुगन्धयुता जातितरूणां त्वचः, चन्दनशाखिनां चन्दनवृक्षाणां सारो मुख्यांशः, अशोकस्य आर्द्राणि क्लिन्नानि किसलयानि पल्लवाः, शैरीषी शिरीषसम्बन्धिनी कुसुमोद्गतिः पुष्पाविर्भावः शिरीषपुष्पाणीत्यर्थः । परिणमत् पाकोन्मुखं मोचं कदली चेति सोऽयं पूर्वोक्तः शीतलपदार्थानां गणः ऊष्महर इति सन्तापहर इति हेतोः पुरा शिवनेत्राग्निना दग्धाय पञ्चेषवे कामाय ग्रीष्मेण दत्तः । ऊष्महरा एते पदार्थाः ग्रीष्म एव भवन्तीति भावः । अत्र पद्ये कोमलवर्णसत्त्वात्समासाभावाच्च वैदर्भी रीतिरिति रीतिकविकाव्योदाहरणमिदम् । अथ शास्त्रार्थकविकाव्यमुदाहरति—**आत्मारामा इति** । यः शास्त्रीयमर्थं काव्ये निबध्नाति स शास्त्रार्थकविः । वेणीसंहारनाटके कृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा भीमसेनस्य सहदेवं प्रत्युक्तिः । आत्मन्येव आसमन्ताद्रमन्ते इति तथाविधा आत्मक्रीडाः, निर्विकल्पे निरालम्बने असम्प्रज्ञाते समाधौ विहितरतयः सर्वदा तदेकसक्ताः, ज्ञानोद्रेकात् विशुद्धज्ञानोदयाधिक्यात् विघटितो दूरीभूतस्तमोग्रन्थिर्येषां ते, सत्त्वनिष्ठाः सात्त्विका मुनयः तमसां ज्योतिषां च परस्तात् विद्याविद्ययोरतीतं यं देवं कमपि अनिर्वचनीयस्वरूपं परमात्मानं वीक्षन्ते मनोगोचरीकुर्वन्ति, तं तादृशं देवं मोहान्धोऽज्ञानसमूढोऽयं दुर्योधनः कथं वेत्तु इत्यर्थः । अत्र निर्विकल्पसमाधि, सत्त्वोद्रेक, तमोग्रन्थि, ज्योतिरात्मादि-शब्दास्तदर्थाश्च योगदर्शनगता इति तेषां काव्यात्मना निबन्धनात् शास्त्रार्थकविकाव्योदाहरणमिदम् । अथ पूर्वोक्तकविप्रभेदगुणैर्मिथो मिलितैः कवीनां तरतमभावं कथयन्नाह—**एषामिति** । एषां पूर्वोक्तकविप्रभेदानां मध्ये द्वाभ्यां त्रिभिर्वा गुणैः शब्दार्थालङ्काररचनात्मकैर्युक्तः कविः कनीयान् अध-

दश च कवेरवस्था भवन्ति । तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्च औपदेशिकस्य । तद्यथा काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी, सेविता, घटमानो, महाकविः, कविराज, आवेशिकः, अविच्छेदी, सङ्क्रामयिता च । यः कवित्वकामः काव्यविद्योपविद्याग्रहणाय गुरुकुलान्युपास्ते स विद्यास्नातकः । यो हृदय एव कवते निह्नुते च स हृदयकविः । यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सोऽन्यापदेशी । यः प्रवृत्तवचनः पौरस्त्यानामन्यतमच्छायामभ्यस्यति स सेविता । योऽनवद्यं कवते न तु प्रबध्नाति स घटमानः । योऽन्यतरप्रबन्धे प्रवीणः स महाकविः । यस्तु तत्र तत्र भाषाविशेषे तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स कविराजः । ते यदि जगत्यपि कतिपये । यो मन्त्राद्युपदेशवशाल्लब्धसिद्धिरावेशसमकालं कवते स आवेशिकः । यो यदैवेच्छति तदैवाविच्छिन्नवचनः सोऽविच्छेदी । यः कन्याकुमारा-

---

मश्रेणिगत इत्यर्थः । पञ्चभिः षड्भिर्वा गुणैर्युक्त. कविर्मध्यमः । पूर्वोक्तैः सर्वैरेव गुणैर्युक्तश्चेत् स महाकविव्यपदेशार्हो भवतीत्यर्थः ॥ अथ कवेरवस्था आह—दश चेति । कवेः काव्यनिर्मातुर्दशसंख्याका अवस्था भवन्ति । तत्र यो बुद्धिमान् आहार्यबुद्धिश्च तयोः सारस्वताभ्यासिकयोः सप्तावस्था भवन्ति । औपदेशिकस्य दुर्बुद्धेस्तिस्रो ऽवस्थाः सम्भवन्ति । अथावसरप्राप्ता अवस्था निरूपयितुकामस्तादृशानवस्थाविशिष्टानेव निरूप्य तद्द्वारा अवस्था अपि प्रकटयन्नाह—तद्यथेति । १ काव्यविद्यास्नातकः २ हृदयकविः ३ अन्यापदेशी ४ सेविता ५ घटमानः ६ महाकविः ७ कविराजः ८ आवेशिकः ९ अविच्छेदी १० सङ्क्रामयिता चेत्येषु प्रत्येकं लक्षयति क्रमशः । तत्र प्रथमतः काव्यविद्यास्नातकमाह—यइति । कवित्व कामयमानो यः पुरुषः काव्योपयुक्ता आन्वीक्षिक्यादिविद्या कलाद्या उपविद्याश्च ग्रहीतु काव्यविद्याधुर्धराणा महाकवीनां गुरूणां कुलानि सेवते स काव्यविद्यास्नातकः । वेदमधीत्य स्नायादिति वत् काव्यविद्यागुरुभ्यो महाकविभ्यः काव्यविद्यां साकल्येनाधिगम्य यः स्नाति स इत्यर्थः । यश्च लज्जया दोषप्रकाशभिया वा स्वहृदयएव कवते स्वकाव्यमन्येभ्यो न दर्शयति स हृदयकविः । यः स्वनिर्मितमपि काव्यं दोषभिया सभामध्ये ऽन्यस्येत्युक्त्वा पठति सोऽन्यापदेशी । (यः प्रवृत्तवचनः

दिषु सिद्धमन्त्रः सरस्वतीं सङ्क्रामयति स सङ्क्रामयिता। सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति। "कः पुनरयं पाकः ?" इत्याचार्याः। "परिणामः" इति मङ्गलः। "कः पुनरयं परिणामः ?" इत्याचार्याः। "सुपां तिङां च श्रवःप्रिया व्युत्पत्तिः" इति मङ्गलः। सौशब्द्यमेतत्। "पदनिवेशनिष्कम्पता पाकः" इत्याचार्याः। तदाहुः—

---

छन्दःपूरणाभ्यासवशात्प्रचालितकवितप्रवृत्तिः पुरुषः प्राचीनानां कवीना मध्ये कस्याऽपि भावमादाय स्ववचनैर्निबध्नाति स सेविता। यः अनवद्य निर्दोषं रसभावपूर्णमपि रचयति, किन्तु तथाविध कमपि प्रबन्धं रचयितुं न शक्नोति। अर्थाद्यस्य रसभावपूर्णा रचनाशक्तिः सुदूरं नानुवर्त्तते मध्य एव त्रुट्यति स घटमानः। यो गद्यपद्यान्यतरप्रबन्धरचने प्रवीणः स महाकविः। यश्च मागधीशौरसेन्यादिप्राकृतसंस्कृतापभ्रंशादिभाषासु गद्यपद्ययोस्तत्तदलङ्काररसविशेषे च यथेच्छं रचयितु समर्थः स कविराजः। कविराजास्तु प्रायशो नैव भवन्ति, ते यदि जगति सम्भवन्ति तर्हि कतिपये एव। यो मन्त्रप्रभावात्, आदिपदात्सारस्वतचूर्णसेवन, मन्त्रसिद्धपुरुषकृतशिरःस्पर्श. देवतावरदानादितोऽपि लब्धकवित्वसिद्धिरावेशकालएव कवते स आवेशिकः। य इच्छामात्रेण काव्यं कर्तुं शक्नोति, न तस्य किमपि प्रतिबन्धकं सोऽविच्छेदी। यः, सिद्धमन्त्रः पुरुषः स्वशक्तिं कन्याकुमारादिषु शिरःस्पर्शादिद्वारा संक्रामयति, जनयति स संक्रामयिता। यत्तु केचित् 'संक्रामयतिं स्वस्मिन् स्थापयति स संक्रामयिता' इत्याहुस्तदपेशलम्। एवं कवीना भेदप्रभेदान्निरूप्य तदीयकवितानां तारतम्यप्रयोजकं 'पाक व्याचिख्यासुराह—**सततमिति**। सुकवेः—सत्सम्प्रदायाधिगतकाव्यविद्यस्य रसभावघटनानिपुणस्य, न तु छन्दोमात्र पूरयितुः। निरन्तरं कविताभ्यासवशात् वाक्यानि पाकमनुभवन्ति। तत्राचार्याणां शङ्का—कः पुनरयं पाक इति। तत्र मङ्गलाचार्यस्योत्तरम्—परिणामः पाक इति। कोऽसौ परिणाम इत्याचार्यप्रश्ने पुनर्मङ्गलोत्तरम्-सुबन्ततिङन्तपदानां श्रुतिमनोहरः सन्निवेश एव स इति। नेदमभिमतमाचार्याणाम्। यदुक्त मङ्गलेन न स पाकः, किन्तु सौशब्दयमात्रम्। पदाना सुबतिङन्तादीनां निवेशने निष्कम्पता स्थिरतैव किल पाक इत्याचार्या. प्राहुः। तदेतदाचार्योक्तं समर्थयति—**आवापोद्धरणे इति**। आवापः काव्यानु-

आवापोद्धरणे तावद्यावद्दोलायते मनः ।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥

"आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाकः" इति वामनीयाः ॥ तदाहुः—

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् । १९
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥

"इयमशक्तिर्न पुनः पाकः" इत्यवन्तिसुन्दरी । यदेकस्मिन्वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान्भवति, तस्माद्रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः । यदाह—

गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः ।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति ॥

---

कूलपदनिवेशनं, उद्धरणं प्रतिकूलपदपरित्यागः, एतद्द्वय तावदेव भवति, यावन्मनः दोलायते विकल्पारूढ भवति । पदानां स्थैर्ये स्थापिते सति, पदपरिवर्त्तने ऽनावश्यके सति सरस्वती सिद्धा हन्त इति हर्षे । एतावता पदानां परिवर्त्तनानर्हत्त्वं पाक इति पूर्वमते फलितम् ।

अथात्र विषये वामनाचार्यमतमाह—**आग्रहेति** । आग्रहः पदसन्निवेशः, परिग्रहस्त्यागः । पदानां स्थैर्ये परिवर्तनासहत्वे पर्यवसायः पर्यवसानम् । पदानां परिवृत्त्यसहत्वं पाक इति वामनमते फलितम् । उक्तार्थमुपोद्बलयन्नाह—**यत्पदानीति** । यत्प्रबन्धघटकानि पदानि परिवृत्तिसहत्वं त्यजन्त्येव, परिवृत्तिं नैव सहन्ते, पदपरिवर्त्तने कृते सति सभीहितार्थं नोपस्थापयन्ति । शब्दाना न्यासे सन्निवेशने निष्णाता निपुणा. कवय. तं शब्दपाकमिति प्रचक्षते कथयन्तीत्यर्थः । उपरि दर्शितवामनमतप्रतिकूला राजशेखरदयिताया वाग्देव्यवतारभूताया अवन्तिसुन्दर्या उक्तिमाह—**इयमिति** । यतः वामनमते शब्दाना परिवृत्त्यसहत्वं पाक इत्युक्तम्, नासौ पाकः किन्त्वेषा कवेरशक्तिरसामर्थ्यमेव । तत्र हेतुमाह—**यदेकस्मिन्निति** । यत् यस्मात्कारणात् एकस्मिन्नपि वर्णनीये वस्तुनि महाकवीनामनेकोऽपि विविधोऽपि पाठः परिपाकवान् भवति । तस्मात्पदानां परिवृत्त्यसहत्वं पाक इति वामनकथनं न समञ्जसमित्यर्थः । स्वाभिमते पाकलक्षणेऽन्येषा सम्मतिमाह—**गुणेति** । गुणानाम-

तदुक्तम्—

सति वक्तरि सत्यर्थे शब्दे सति रसे सति । २१
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥

"कार्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोऽभिधाविषयस्तत्स हृदयप्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ" इति यायावरीयः । स च कविग्रामस्य काव्यमभ्यस्यतो नवधा भवति । तत्राद्यन्तयोरस्वादु पिचुमन्दपाकम्, आदावस्वादु परिणामे मध्यमं बदरपाकम्, आदावस्वादु परिणामे स्वादु मृद्वीकापाकम्, आदौ मध्यममन्ते चास्वादु वार्त्ताकपाकम्, आद्यन्तयोर्मध्यमं तिन्तिडीकपाकम्, आदौ मध्यममन्ते स्वादु सहकारपाकम्, आदावुत्तममन्ते चास्वादु क्रमुकपाकम्, आदावुत्तममन्ते

---

लङ्काराणां रीतीनामुक्तीनां शब्दानामर्थानां च ग्रथनस्य क्रमः येन हेतुना स्वदते आस्वादयोग्यो भवति, स मां प्रति मन्मते वाक्यपाक इत्यर्थः । पाकमेव स्तुवन्नाह—**सतीति** । वक्तरि, शब्दे, अर्थे, रसे च सति, अर्थात् महनीये वक्तरि सति श्रवणमनोहरे तदीये शब्दे च सति अनुच्छिष्टे तदर्थे च सति, विगलितवेद्यान्तरानन्दोद्बोधसमर्थे रसे चाभिव्यक्ते सति येन पाकेन विना वाक् मधु न स्रवति स पाकोऽवश्यमभ्युपेय इत्यर्थः । तमेव पाकं स्वमतेनाह—**कार्यानुमेयतयेति** । कार्येण सहृदयहृदयाह्लादकत्वलक्षणेन पाकस्य अनुमेयतया येन विना नाह्लादः स पाक इति विधया यत्तच्छब्दनिवेद्यः पाकोऽभिधाविषयो वाच्यवृत्तिविषयः, किञ्च सहृदयमण्डले तदनुभवसिद्ध इत्यसौ व्यवहारस्याङ्गमेवेति राजशेखरमतम् । ईदृशोऽसौ पाकः मुहुर्मुहुः काव्यमनुशीलयतां कवीनां नवप्रकारो भवति । तान् नवप्रकारान् सलक्षणान् नामग्राहमाह—**तत्रेति** । तत्र तेषु नवसु पाकेषु मध्ये आदावन्ते चास्वादु काव्यं पिचुमन्दपाकम् । पिचुमन्दो निम्बः । तस्य सर्वावस्थासु कटुत्वात् । आदावस्वादु परिणामे मध्यम बदरपाकं नाम काव्यम् । बदरस्याऽपि तथाभूतत्वात् । आदावस्वादु परिणामे स्वादु मृद्वीकापाकं काव्यम् । मृद्वीका द्राक्षा तस्या आदावस्वादुत्वेऽपि परिणामे स्वादुतमत्वात् । आदौ मध्यममन्ते चास्वादु वार्त्ताकपाकं काव्यम् । वृन्ताकस्य तथात्वात् । आदावन्ते च मध्यमं तिन्तिडीकपाकं काव्यम् । तिन्तिडीकं चिञ्चा । तस्या आ-

मध्यमं त्रपुसपाकम्, आद्यन्तयोः स्वादु नालिकेरपाकमिति । तेषां त्रिष्वपि त्रिकेषु पाकाः प्रथमे त्याज्याः । वरमकविर्न पुनः कुकविः स्यात् । कुकविता हि सोच्छ्वासं मरणम् । मध्यमाः संस्कार्याः । संस्कारो हि सर्वस्य गुणमुत्कर्षति । द्वादशवर्णमपि सुवर्णं पावकपाकेन हेमीभवति । शेषा ग्राह्याः । स्वभावशुद्धं हि न संस्कारमपेक्षते । न मुक्तामणेः शाणस्तारतायै प्रभवति । अनवस्थितपाकं पुनः कपित्थपाकमामनन्ति तत्र पलालधूननेन अन्नकणलाभवत्सुभाषितलाभः ।

---

म्लैकरसत्वात् । आदौ मध्यममन्ते च स्वादु सहकारपाक काव्यम् । सहकार-आम्रः । तस्य परिणामे सरसत्वान्मधुरत्वाच्च । आदौ स्वादु परिणामे चास्वादु क्रमुकपाक काव्यम् । क्रमुकः पूगः । तस्यादौ सरसत्वेन स्वादुत्वात् । आदावुत्तममन्ते मध्यम त्रपुसपाक काव्यम् । त्रपुसं कर्कटी । तस्यास्तथात्वात् । आदावन्ते च स्वादु नालिकेरपाकं काव्यम् । नालिकेरस्य सर्वावस्थासु स्वादुत्वात् । अथोक्ताना पाकाना मध्ये तातरतम्यं कथयति—**तेषामिति**। तेषा नवविधपाकाना मध्ये त्रिष्वपि त्रिकेषु प्रथमे पाकाः पिचुमन्दवार्ताकक्रमुकपाकास्त्याज्याः । अस्वादुत्वादनादेया इत्यर्थः । तत्र हेतुमाह—**वरमिति** । अकविः कवित्वशक्तिरहितो वरम्, न पुनः कुकविः स्यात् । कुतः । कुकविता हि सोच्छ्वासं सजीवन मरणम् । यत्र प्राणा अपि न निर्गच्छन्ति व्याधिरपि न शाम्यति तथाविध जीवन्मरणमित्यर्थः । मध्यमा बदरतिन्तिडीकत्रपुसपाकाः संस्कारवशतो ग्राह्या भवन्ति । यतः संस्कारो हि सर्वस्य अधमस्यापि गुणमुत्कर्षयति वर्द्धयते । द्वादशवर्णमधममपि सुवर्णमग्नितापनेन विशुद्ध हेम भवतीति दृष्टान्तः । शेषाः मृद्वीकासहकारनालिकेरपाकास्तु यथेच्छ ग्राह्याः । तत्र सस्कारो नापेक्षित इत्याह—**स्वभावशुद्धमिति** । यत् स्वभावत एव शुद्ध निर्दोष तत् सस्कार नापेक्षते । अत्र दृष्टान्तः । सुवर्णस्योत्कर्षाधायकोऽपि शाणो मुक्तामणेस्तारतायै न भवति । अनवस्थित. स्पष्टमप्रतिपद्यमानः पाको यस्मिन् ईदृश काव्यं कपित्थपाकमित्युच्यते । यथा पलालस्य सस्यत्वचो धूननेन ईषदन्नकणलाभो भवति, एव तथाविधकाव्यानुशीलनेन महता प्रयत्नेनेषत्सुभाषितलाभो भवति । उपसह-

सम्यगभ्यस्यतः काव्यं नवधा परिपच्यते ।
हानोपादानसूत्रेण विभजेत्तद्धि बुद्धिमान् ॥
अयमत्रैव शिष्याणां दर्शितस्त्रिविधो विधिः ।
किन्तु विविधमप्येतत्त्रिजगत्यस्य वर्त्तते ॥

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे शिष्यविशेषेषु काव्यपाककल्पः पञ्चमोऽध्यायः ॥

---

रति—**सम्यगिति** । काव्यं सर्वदा अनुशीलयतः कवेः काव्यं नवप्रकारैः पच्यते परिणमति । तत्र बुद्धिमान् पुरुषः हानोपादानयोस्त्यागग्रहणयोः सूत्रेण तद्विभजेत् । अस्वादुप्रधानान् पाकान् परित्यजन् स्वादुप्रधानाश्चाददीत । शिष्याणां विनेयानां कृते अत्र ग्रन्थे अयं त्रिविधपाकादानात्मको विधिः दर्शितः । किन्तु अस्य विविधा विचारा जगति वर्तन्ते सङ्क्षेपादेवात्र कथितमिति भावः ।

आदितः पञ्चमाध्यायपर्यन्तं यत्नतो मया ।
व्याख्याता काव्यमीमांसा राजशेखरनिर्मितिः ॥ १ ॥
परीक्ष्यच्छात्रवृन्दस्य साहाय्यं कर्तुमिच्छता ।
राजशेखरवाग्व्याख्यासाहसं दुष्करं कृतम् ॥ २ ॥
गुणगृह्याः सहृदया अनसूयालुचेतसः ।
निरीक्षन्तामिमां व्याख्यां करुणार्द्रैर्विलोचनैः ॥ ३ ॥
एतां श्रीकाव्यमीमांसा–चन्द्रिकामुज्ज्वलप्रभाम् ।
आचामन्तु चिरं छात्रचकोराः स्वैरमुत्सुकाः ॥ ४ ॥
श्रीगङ्गाधरसद्गुरुप्रतिफलत्सारस्वतज्योतिषः
श्रीरामाङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
श्रीमद्भैरवनायकात्मजनुषः सद्धर्मलक्ष्मीजुषः
श्रीनारायणशर्मणः कृतिरियं विद्वन्मुदे जायताम् ॥ ५ ॥

इति श्रीमत् खिस्ते—इत्युपनामकभैरवनायकतनूजनि साहित्याचार्य श्रीनारायणशास्त्रिकृतायां काव्यमीमांसाचन्द्रिकायां पञ्चमोऽध्यायः ।

**समाप्तोऽयं प्रथमो भागः ।**

THE

# KASHI-SANSKRIT-SERIES

( HARIDÂS SANSKRIT GRANTHAMÂLÂ )

NO. 86

( Kavya Section, No 13 )

THE

# KĀVYAMĪMĀṂSĀ

of

RÂJAS'EKHARA

*Edited With His own*

THE KĀVYAMĪMĀṂSĀ CHANDRĪKĀ COMMENTARY

*By*

SÂHITYÂCHÂRYA

*Pandit Sri Nârâyana S'âstri Khiste*

*Asst. Librarian Government Sanskrit College,*

*Saraswati Bhawan Library, Benares*

( PART I ADHYAYAS I-V )

PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADÂS-HARIDÂS GUPTA,

*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1931

